[ जगत्कर्तुर्भगवतः निरतिशयशक्तिमत्त्वादिनिरूपणम् ]

उक्तं हि उपादानोपकरणसाक्षात्कारिण एव तत्र तत्र[1] कर्तृत्वमिति । न च[2] कर्मजन्यापूर्व[3]साक्षात्कार[4]क्षमः क्षेत्रज्ञः कश्चित् प्रज्ञायते, प्रतिज्ञायते वा । अतः क्षेत्रज्ञतदुपभोगतत्साधनधर्माधर्मादिनिखिललोकावलोकनचतुरः कोऽपि निरतिशयशक्तिवैचित्र्यः पुरुषोऽभ्युपगन्तव्यः । *तस्य च अप्रतिघज्ञानत्वादयस्सहजाः ।

यथा[5]ऽऽहुः[6]—

§'ज्ञानमप्रतिघं[7] तस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥' इति ।

इममेव चा[8]र्थं मन्त्रार्थवादेतिहासपुराणवादा उपोद्बलयन्ति—†'द्यावापृथिवी जनयन् देव एकः', $'प्रजापतिर्वेदान्[9] असृजत' इत्येवमादयः[10] ।

---

[1] $M_1$ & $M_7$ omit तत्र
[2] $M_1$ omits न च
[3] $M_1$—चक्षुजन्यापूर्वं°
[4] $M_1$, $M_2$, $M_7$, My & B—°साक्षात्करण°
[5] $M_1$—तथा°
[6] $M_6$ omits आहुः
[7] $M_3$—ज्ञानं प्रतिघनम्
[8] P, PM, T, $M_1$, $M_6$, $M_7$, My, $V_2$ omit च
[9] $M_3$, $M_4$, $M_6$, B—°देवासुरान्
[10] $M_1$—इत्येवमादि

---

* *Vide Doctrine of Śakti in Indian Literature*, p. 42 :

" God in the conception of the Naiyāyikas is one that is not only the efficient cause and supreme agent of the world, but possesses innumerable qualities such as knowledge, activity, desire, etc. ".

*Cf.* Vātsyāyana's commentary on the *Nyāyasūtra*, IV. i.21 , p. 292 :

" guṇaviśiṣṭamātmāntaraṁ īśvaraḥ ".

*Cf.* also *ibid*: p. 293 :

" na tāvadasya buddhiṁ vinā kaściddharmo liṅgabhūtaśśakya upapādayitum ".

§ To be identified. This verse is quoted by Sucaritamiśra in his commentary on the *Ślokavārtika*, p. 110 [ Trivandrum Skt. Series No. 90 ].

† *Mahānārāyaṇīya Upaniṣat*: II. 2.

$ To be identified.



[ भगवतो वेदपञ्चरात्रप्रणेतृत्वकथनम् ]

स चायमादिकाले भगवान् प्रलीननिखिलकरणकलेवरादिभोगोपकरणचेतनेतरायमाणजीवजाला[1]वलोकनजनितमहानुग्रहः सकलमपि[2] जगदुपजनय्य, तदभिलषितसमस्तसांसारिकसम्पत्प्रात्युपायप्रकाशनबहुलां त्रयीमेकतो *निर्माय, पुनरपि विविधदुरितपरम्पराकीर्णभवार्णवनिमग्नान् उद्विग्नान्[3]वलोकयन्, परमकरुणतया[4] तप्तमानसः, परमनिःश्रेयससाधनस्वाराधनावबोधसाध[5]नीभूताः पञ्चरात्रसंहिताः सनत्कुमारनारदादिभ्योऽभ्यवोचदिति, त्रयीसमानस्वतन्त्रानुभवमूलानि तन्त्राणि कथमिव यादृशतादृशमन्वादिस्मरणगोष्ठीमभितिष्ठन्ति ?

[ अथ मीमांसकेन वेदानामपौरुषेयत्वप्रतिपादनम् ]

†स्यादेवं, यदि वेदानां निर्माताऽपि प्रमाणतः ।
कुतश्चिदुपलभ्येत[6]; न चासावुपलभ्यते ॥
न च वाक्यत्व[7]लिङ्गेन वेदकारोऽनुमीयते ।
अभिप्रेतविशेषाणां विपर्यासप्रसङ्गतः ॥
वाक्यं हि यत् पराधीनरचनं संप्रदृश्यते ।
शरीरिणैव तत्सर्व[8]मुच्यमानं विलोक्यते ॥
पुण्यपापनिमित्तं च शरीरं सर्वदेहिनाम् ।
एवं पुण्येत§राधीन[9]सुखदुःखस्य देहिनः ॥
अनीश्वरस्य$निर्माणं वाक्यत्वमनुमापयेत् ।

---

[1] $M_2$—°जात°; $M_6$—°लोक°
[2] $M_2$ omits अपि
[3] $M_3$ omits उद्विग्नान्
[4] My—°कारुणिकतया
[5] 'A' omits साध
[6] $M_6$—°उपलभ्यते
[7] $M_3$—°वाच्यत्व°
[8] $M_1$, $M_2$, $M_4$, My, B—तत्पूर्वम्°
[9] $M_6$ reads पुण्यतराधीन°

---

* 'एकतः' कार्त्स्न्येनेति यावत् ।

† The Mīmāṁsaka raises his objection again.

§ पुण्यतदितरा( पापा )धीनेति भावः ।

$ 'निर्माणं' निर्मातृत्वमिति भावः ।

अपि चैवं प्रमाणत्वं वेदानामपि दुर्लभम् ॥
न हि मानान्तरापूर्वे धर्मे *तस्यास्ति सम्भवः ।

‡ननु कथं मानान्तरापूर्वो धर्मः ? उक्तं हि 'साक्षात्करोति धर्माधर्मौ, कथमन्यथा तदुपकरणं जगज्ज[1]नयति ?' इति ।

[ जगतः पराभिमतकर्त्रभावत्वसमर्थनम् ]

$सत्यमुक्तं दुरुक्तं तत्; विश्वस्य जगतो न हि ।
विद्यते कोऽपि निर्माता, येनैवमपि कल्प्यते ॥
विचित्रसन्निवेशत्वयुक्त्या यदपि साधितम् ।
तत्रोच्यते—त्रिधा भावा लौकिकैः परिलोकिताः ॥
†प्रत्यक्षदृष्टकर्तारः केचिदेते घटादयः ।
अविद्यमाननिर्माणास्तथान्ये गगनादयः ॥
सन्दिह्यमाननिर्माणाः केचित् विश्वम्भरादयः ।

तत्र प्रथमसन्दर्शितराशिद्वयेऽनवकाश एवेश्वर[2]व्यापारः । §अद्यवदेव[3] विश्वम्भरादयः क्रमप्राप्तागन्तुकोपचयापचया[4] न युगपदुदयविलयभागिनः । ईदृशोत्पत्तिभङ्गौ मीमांसकानामपि सम्मतावेवेति सिद्धसाधनत्वम् ।

[1] B omits जगत्
[2] $M_3$, $M_4$—°ऐश्वर°
[3] T, $M_2$, $M_5$, A, $V_1$—आद्यवदेव
[4] $M_4$ & B omit अपचयाः; P, PM—°उपचयापचययोः

* 'तस्य' निर्माणस्येत्यर्थः ।

‡ This is the contention of the Naiyāyika.

$ The Mīmāṁsaka refutes the above contention of the Naiyāyika. *Vide Śaivasiddhānta*, p. 74 ff, for the following :

"It may be noted that even the Lokāyata (Cārvāka) entertains similar view regarding, the world's creatorship, i.e., that there is no creator for it."

† Pāṇini's sūtra: "nadyṛtaśca" (V. iv-153) would require this to be "pratyakṣadṛṣṭakartṛkāḥ", since the compound intended by the author here is of the Bahuvrīhi-type. But according to the well-known saying "sthitasya gatiḥ kalpanīyā", the term "pratyakṣadṛṣṭakartāraḥ" can be interpreted as a Karmadhāraya compound, thus: "yatra pratyakṣadṛṣṭāḥ kartāraḥ, ete kecit ghaṭādayaḥ", in which case, the expression necessarily has to be split into two parts.

§ *Cf. Iśvarasiddhi*, p. 241, where the same sentence occurs.



[ जीवानामेव जगत्कर्तृत्वनिरूपणम् ]

बुद्धिमत्कर्तृता याऽपि प्रयासेन समर्थिता[1] ।
साध्यते साऽपि सिद्धैव; बुद्धिमन्तो हि चेतनाः ॥
*यागादिभिः[2] स्वभोगाय तत्तदुत्पादयन्ति नः§ ।
†युक्तं चोभय[3]सिद्धानां‡ तत्रा[4]धिष्ठानकल्पनम् ॥
वयं च यागादानादि साक्षात्कर्तुं क्षमा यतः ।
$कर्मणः शक्तिरूपं यदपूर्वादिपदास्पदम्[5] ॥
मा भूत् प्रत्यक्षता तस्य, किं तेनाध्यक्षितेन नः ?

×न खलु कुलालादयः कुम्भादिकार्यमारिप्समानाः तदु[6]पादानोपकरणभूतमृद्दण्डचक्रादिकार्योत्पादन[7]शक्तिं साक्षात्कृत्य तत्तदारभन्ते । =यदि परं, शक्तिमविदुषामभिलषितसाधनाय, तदु-

[1] $M_7$—समुत्थिता
[2] $M_2$, My—यागादयः
[3] $M_3$—चेदुभय°
[4] $M_6$—तन्त्र°
[5] A—°पदान्वितम्
[6] $M_6$ reads another तत्
[7] My—°कार्योपादान°

* *Vide Karmamīmāṁsā*, p. 61:

"Though the Mīmāṁsā is so deeply concerned with the sacrifice, it has no belief in the doctrine that the rewards of offering are to be expected either from the deities to whom the offerings are directed to be made, from a God as Creator or apportioner of reward and punishment. The sacrifice generates an unseen potency, whence the goods desired by sacrificers are obtained."

§ "नः" अस्मदिष्टाः चेतना इत्यन्वयः ।

† *Cf. Iśvarasiddhi*, p. 240:

"yuktaṁ caitat yadubhayavādisiddhānāmeva cetanānāṁ kartṛtvābhyupagamaḥ, lāghavāt; na copādānādyanabhijñatayā tatpratikṣepaḥ ।
upādānaṁ pṛthivyādi yāgadānādi sādhanaṁ ।
sākṣātkartuṁ kṣamante yat sarva eva hi cetanāḥ ॥"

‡ उभयवादिसम्मतानां जीवानामिति भावः ।

$ *Cf. Iśvarasiddhi*, p. 241, where this verse is reproduced almost as it is, but for a slight change in the second half of the second line, which reads as "śaktimaddhyakṣagocaraḥ".

× *Cf. Iśvarasiddhi*, p. 242, for identical statements.

= 'यदि परं' इत्यस्य, 'यदि यत्किञ्चिद्विवक्षितं, तर्हि एवं वक्तव्यम्' इत्यर्थः ।

पादाना[1]दिव्यवहारोऽनुपपन्नः । *इह तु नित्यागमजन्मना[2] ‡प्रत्ययेन $सम्प्रत्याकलितयागादितत्तदुत्पादनपाटवाः पुरुषाः तैरेव विश्वम्भरादिभावानाविर्भावयन्ति[3] ।

तथा च ' प्रत्यक्ष×प्रकृतिकरणः कर्मकरण-
प्रवीणो नैवान्यः क्षम ' इति च नास्त्यत्र नियमः ।
¶अपश्यन्नेवायं प्रकृतिकरणे स्वात्ममनसी[4]
ननु ज्ञाने कर्ता भवति पुरुषः तत् कथमिव[5] ?

[ पृथिव्यादीनां प्रत्यभिज्ञया नित्यत्वसाधनम् ]

†' [6]विनाशीदं विश्वं जगदवयवित्वादि'ति च यत्[7]
बलीयःप्रत्यक्षप्रतिहतगतित्वेन[8] तदसत् ।
' स एवायं मेरुः ' ' दिवसकरबिम्बं च तदिदम् ',
' धरित्री सैवे'ति स्फुटमिह यतो धीरुदयते ॥

---

[1] ' T ' records a variant तत्तदुपादान° gives the reading adopted by us.

[2] $M_1$—°जन्मता

[3] $M_2$, My—विश्वम्भरादिभावना भावयन्ति

[4] All printed texts and manuscripts read स्वात्ममनसि, except My, which gives the reading adopted by us.

[5] $M_1$, $M_2$, $M_4$, $M_7$, My,—कथमपि

[6] $M_2$ & My add यदपि before विनाशीदम्

[7] $M_3$ reads वियत् for च यत्

[8] P, PM, T, A, $M_3$, $M_5$, $M_6$—°मुखत्वेन

---

* *Cf. Ślokavārtika*, Sambandhākṣepaparihāra: śl. 75:
" kasyacit hetumātratvaṁ yadyadhiṣṭhānatocyate
karmabhiḥ sarvajīvānāṁ tatsiddheḥ siddhasādhanam ".

The same idea is expressed in the *Īśvarasiddhi*, p. 242:
" āgamādavagamyante vicitrāḥ karmaśaktayaḥ
tena karmabhirātmānaḥ sarvaṁ nirmimatāṁ pṛthak ".

‡ " Pratyaya " here means " jñāna ".

$ " Samprati " is used in the sense of " samyak ". Also see the following verse " kṛtārthatvāt krīḍā " etc. where also the word " samprati " occurs.

× By " prakṛti " is meant " upādāna " and by " karaṇa " is meant " nimitta " and the like.

¶ *Cf. Īśvarasiddhi*, p. 246: " na copādānādisākṣātkāriṇa eva kartṛtvamityapi niyamaḥ; upādānamupakaraṇaṁ ca aviduṣa evātmano jñānādiṣu kartṛtvāt ".

† *Cf.* तथा सावयवत्वेन etc., above.



शक्नोति हि[1] प्रत्यभिज्ञैव समस्त[2]कालसम्बन्धमेषामवगमयितुम् । सन्ति हि पूर्वापरकालयोरपि तादृशाः पुरुषाः, प्रादुःषन्ति[3] येषामीदृशाप्रत्ययाः । प्रयोगश्च भवति[4]—

महीशैलपतङ्गादिप्रत्यभिज्ञानव[5]न्नरः* ।
अतीतकालः, कालत्वादिदानीन्तनकालवत् ॥

एवमनागतेऽपि प्रयोगो दर्शयितव्यः[6] ।

‡न चेदृशप्रयोगेण घटादेरपि नित्यता[7] ।
प्रसज्यते[8], यतस्तत्र प्रत्यक्षौ भङ्गसम्भवौ ॥
§विरोधे सति येनाऽऽत्मा हेतुना नैव लभ्यते ।
[9]न लभ्यतेऽविरोधेऽपि[10] तेनात्मेत्यस्त्यसम्भवः[11] ॥
†महत्त्वे सति स्पन्दमानत्वयुक्त्या
जगज्जन्म भङ्गश्च यः प्रत्यपादि ।

---

[1] B omits हि

[2] $M_1$ omits स्त

[3] A, $M_1$, $M_2$, $M_4$, $M_7$, B— प्रादुष्यन्ति; $M_3$—प्रदुष्यन्ति; $M_6$—प्रादुर्भवन्ति

[4] $M_6$—प्रयोगाश्च भवन्ति

[5] PM, $M_1$, $M_2$—°ज्ञानवान्°

[6] $M_2$, $M_4$, $M_7$, My, B—दर्शितव्यः

[7] $M_2$—°अनित्यता

[8] A, $M_3$—प्रसज्येत

[9] A reads स for न

[10] P— विरोधेऽपि

[11] $M_1$, $M_2$, $M_4$, $M_6$, $M_7$, My & B—°सम्भवः

---

* This long compound qualifies the term " atītakālaḥ ".

‡ ' सोऽयं घट ' इति प्रत्यभिज्ञया घटादेरपि नित्यत्वं न शङ्कनीयमिति भावः । तत्र कारणमाह ' यत ' इति ।

§ ' विरोधे सति, येन हेतुना आत्मा नैव लभ्यते [ हेतुत्वं हीयत इति यावत् ], तेन अविरोधेऽपि सति, आत्मा न लभ्यते इति असम्भवोऽस्ति; इत्येतत् न सम्भवति ।' इति श्लोकस्यास्य पदान्वयः ।

*Cf. Tantravārtika* under I. iii. 51-54, 55:
na hi yena pramāṇatvaṁ labdhapūrvaṁ kadācana ।
tena tat sarvadā labhyamityājñāpayatīśvaraḥ ॥
na ca yad balavadruddhamātmānaṁ naiva vindati ।
avirodhe 'pi tenātmā na labdhavyaḥ kathaṁcana ॥
na cāpi bādhakābhāvāt labdha ātmeti sarvadā ।
labdhavyaḥ sa virodhe 'pi pūrvasāmānyadarśanāt ॥

† *Cf.* महत्तया सनाथेन etc., above.

स च प्रत्यभिज्ञाबलध्वस्तहेतुः
न ह्यत्वमद्य प्रपद्येत युक्त्या ॥

अपि च[1] धर्मिविशेषविरुद्धश्चायं हेतुः 'कार्यत्वात्' इति । *कार्यत्वं हि स्वभावदृष्ट[2]विग्रहवत्वानाप्त[3]कामत्वानीश्वरत्वासार्वज्ञ्या-दिव्याप्तिवित्त्यु[4]पयुक्ततरानेकविशेषानुषक्तं कथमिव तत्प्रत्यनीक-भूताशरीरनित्यतृप्तसर्वज्ञत्वाद्यभिमतविशेषान् §साध्यधर्मिणि अव-गमयति ? स्व[5]शरीरप्रेरणमपि शरीरसम्बन्धासमवायि[6]कारणक[7]-प्रयत्नवतो नान्यस्येति न कथंचिदशरीरिणः कर्तृत्वसम्भवः ।

अथैतद्दोषहानाय देहवानित्युपेयते ।
स देहो जन्मवान्, मा वा ? जन्मवत्त्वेऽनवस्थितिः[8] ॥
नित्यत्वेऽवयवित्वं च स्यादनैकान्तिकं तव[9] † ।

[1] A omits अपि च
[2] B omits दृष्ट
[3] $M_6$— °विग्रहवत्त्वेन प्राप्त°
[4] T records a variant: °व्याप्तमिति°
[5] $M_6$ omits स्व
[6] $M_3$—°सम्बन्धत्वादि°
[7] $M_4$—°करणक°
[8] B—°अवस्थितिः । T records a variant : न च स्थितिः
[9] B—न वा

* *Vide Karmamīmāṁsā*: pp. 61-62:

" Experience, Prabhākara urges, shows us the bodies of all animals being produced by purely natural means; we can argue hence to the facts of the past and future and need invoke no extraneous aid......Supervision ( by God ) also is impossible, even had God the necessary knowledge; it must take the form either of contact, which is impossible as merit and demerit being qualities are not subject to contact, or inherence, and plainly a man's qualities cannot inhere in God. If the argument is adduced on the analogy of the carpenter, it may be replied that on this basis, the creator would have to be an embodied spirit, and no embodied spirit can effect such subtle things as the atoms or merit and demerit. "

§ 'सिसाधयिषिते कर्तरि' इत्यर्थः ।

† त्वदुक्तस्य सावयवत्वहेतोरनैकान्तिकदोषो भवेदित्यन्वयः ।



*यदप्येते[1]ऽवोचन्नधिकरणसिद्धान्तबलतो
विशेषास्सिद्ध्यन्तीत्ययमपि च पन्था न घटते ।
स[2] हि न्यायो जीवदपि, यदि च[3] मानान्तरकृतो
विरोधोऽस्यादृष्टः, पुनरपि विरोधः स्फुटतरः † ॥

§ननु चावधृताविनाभावनियममपि[4] यदि न विश्वंभरादि बुद्धिमन्निमित्ततामवगमयति, प्रत्यस्तमित[5]स्तर्हि[6] अनुमेय[7]व्यवहारः । अथावगमयति[8], अवगमयत्येवासावखिलत्रैलोक्यनिर्माणप्रवीणं तमपि[9] कर्तारम् ।

न ब्रूमो नावगमयतीति । किन्तु यावन्तो विशेषा व्याप्ति-

[1] $M_1$—यद्प्येके; B—तदप्येते
[2] A reads न for स
[3] $M_2$ reads यदि च as च यदि
[4] $M_1$, $M_2$, $M_4$, $M_7$ & B omit नियम and read °अविनाभावमपि
[5] P, PM, T, $M_3$ & $M_6$—प्रत्यस्तिमितः
[6] $M_1$ adds इति
[7] $M_3$, $M_6$—अनुमानानुमेय°
[8] $M_3$, $M_6$ omit अथावगमयति; My—अथवा गमयति
[9] $M_4$—कमपि

* " Adhikaraṇasiddhānta " or " Doctrine resting on Implication ", is defined in the *Nyāyasūtra* under I. i. 30 as " yatsiddhau anvayaprakaraṇasiddhiḥ, so 'dhikaraṇasiddhāntaḥ ". *Cf.* Vātsyāyana's bhāṣya on it: " yasya arthasya siddau anye arthāḥ anuṣajyante, na tair vinā so 'rthaḥ siddhyati, te arthāḥ yadadhiṣṭhānāḥ, so 'dhikaraṇasiddhāntaḥ ". So, Adhikaraṇasiddhānta can be explained as the principle by which, when a certain thing is known or accepted, certain other things automatically follow, by reason of their dependence upon the former. This Adhikaraṇasiddhānta in modern logic is known as " pakṣadharmatā ". Since the fact of earth, etc. having a creator cannot be proved unless that creator is also accepted as a direct perceiver of all entities including the atoms ( the material cause of the cosmos ), the admission of such a power of all-round perception in that creator follows by the principle 'Adhikaraṇasiddhānta' ( Implied Doctrine ).

† " अपि च धर्मिविशेषविरुद्धश्चायं हेतुः " इति पूर्वमेव ( पु. ३२ ) हेतुविरोधः प्रपञ्चितः ।

§ 'अवधृताविनाभावनियममि'त्येतत् 'कार्यत्वम्' इत्यस्य पदस्य अध्याहृतस्य विशेषणं भवितुमर्हति । अथवा 'विश्वंभरादि,' इत्यस्य वा विशेषणत्वेन स्वीकर्तुं शक्यते ।

ग्रहणसमयसंविदिताः, तानप्य[1]विशेषेणोपस्थापयतीति । *न च तावताऽतिप्रसङ्गः । प्रमाणान्तरगोचरे हि लिङ्गिनि लिङ्गबलादापततो विपरीत[2]विशेषान् तत्प्रमाणमेव प्रतिरुणद्धि । §अत्र पुनरतिपतितमानान्तरकर्म[3]भावे† भगवति सिसाधयिषिते यावन्तोऽन्वयव्यतिरेकावधारिता अविनाभावभाजो धर्माः, तानप्यविशेषेणोपस्थापयतीति‡ । ¶तथा च प्राङ्गण[4]निकटवर्ति[5]दूर्वाङ्कुरादिष्वनवसितपुरुषव्यापारजन्मसु अनैकान्तः$ । तत्राप्यतीन्द्रियपुरुषाधिष्ठान[6]कल्पना कल्पना[7]मात्रमेव ।

[ भगवतः जगत्प्रति कर्तृत्वानुपपत्तिसमर्थनम् ]

×क्व वा देशे तिष्ठन्ननवरततृप्तः[8] किमिति वा

---

[1] A omits अपि
[2] $M_2$, My omit विपरीत
[3] A adds another भावे
[4] $M_6$—प्राकट°
[5] A, B—°वृत्ति°
[6] $M_1$, $M_2$, $M_3$, My omit कल्पना
[7] $M_2$, My—कल्पन°
B—अधिष्ठान°
[8] P—°तृप्तिः

---

* यत्र धूमस्तत्र वह्निरिति व्याप्तिर्महानसादौ गृहीता । पर्वते धूमं दृष्ट्वा वह्निमनुमातुं प्रवृत्तस्य पुरुषस्य, तत्रत्योऽपि वह्निः महानसादाविव फूत्कारेणैव प्रवृद्ध इति, स च पाकार्थमुपयुज्यत इत्याद्याः सम्भावनाः सम्भाव्यमाना अत्र अतिप्रसङ्गशब्देन सूचिताः । एतेषां विपरीतविशेषाणां प्रत्यक्षप्रमाणबाध्यत्वमाह प्रमाणान्तरेत्यादिना । तथा च पर्वतं गत्वा तत्रत्यो वह्निः कीदृश इति विचारे क्रियमाणे, पूर्वं वह्निविषये सम्भावितान् फूत्कारप्रवर्धनपाकोपयोगादीन् अतिप्रसङ्गान् प्रत्यक्षप्रमाणमेव निवारयेदिति भावः ।

§ *Cf. Īśvarasiddhi*, p. 244.

† 'सकलप्रमणान्तरानवगते' इत्यर्थः ।

‡ कर्तृत्वमिव अनीश्वरत्वादिकमपि धर्मजातं व्याप्तिबलेन व्यवस्थापयतीत्यर्थः ।

¶ अत्र सन्दर्भानुरोधेन 'तथा च' इत्यस्य 'किञ्च' इत्यर्थो वर्णनीयः ।

$ कार्यत्वहेतुरिति योजनीयम् ।

× *Cf. Nyāyamañjarī* Vol. I, p. 191 :
" kiṁ kimapi prayojanamanusandhāya jagatsarge pravartate prajāpatirevameva vā ? niṣprayojanāyāṁ pravṛttāvaprekṣāpūrvakāritvāt unmattatulyosau bhavet."

*Vide Śaivasiddhānta* p. 83, ff.

" To create the world, the Lord should have occupied some place, but where is it exactly, when we definitely know that by then, space itself has not been created ? "

Kumārila is the most relentless and vehement critic of the divine origination and dissolution of the universe. Creation of the world is refuted in



कदा वा निश्शेषं जनयति ? तदेतद्वि[1]मृशतु ।
क्वचित्तिष्ठन्निष्टं किमपि फलमुद्दिश्य, करणैः,
कदाचित्, यत्किञ्चिज्जनयति कुलालादिरखिलः ॥
*कृतार्थत्वात् क्रीडा न च भवति; हेतुर्यदि खलु

---

[1] $M_3$—तदेकः; $M_6$—तदेकम्°

---

*Ślokavārtika*, under 1-i-5 ; śl. 47 :

" pravṛttiḥ kathaṁ ādyā ca jagataḥ sampratīyate ।
śarīrāder vinā cāsya kathamicchāpi sarjane ? "

Dissolution, likewise, is refuted in śl. 68 :

" pralaye ' pi pramāṇaṁ naḥ sarvocchedātmake na hi ।
na ca prayojanaṁ tena syāt prajāpatikarmaṇā ॥ "

For a detailed refutation of the creative activity of God, at a time when space itself did not exist, see *ibid*. śls. 45, 50-51 :

" yadā sarvamidaṁ nāsīt kvāvasthā tatra gamyatām ।
prajāpateḥ kva vā sthānaṁ kiṁ rūpaṁ ca pratīyatām ॥ "
" sādhanaṁ cāsya dharmādi tadā kiñcinna vidyate ।
na ca nissādhanaḥ kartā kaścit sṛjati kiñcana ॥
nādhāreṇa vinā sṛṣṭirūrṇanābherapīṣyate ।
prāṇināṁ bhakṣaṇāccāpi tasya lālā pravartate ॥ "

* *Vide Ślokavārtika* under I. i. 5, śls. 54–56 :

tathā cāpekṣamāṇasya svātantryaṁ pratihanyate ।
jagaccāsṛjatastasya kiṁ nāmeṣṭaṁ na siddhyati ?
prayojanamanuddiśya na mando ' pi pravartate ।
evameva pravṛttiścet caitanyenāsya kiṁ bhavet ?
krīḍārthāyāṁ pravṛttau ca vihanyeta kṛtārthatā ।
bahuvyāpāratāyāṁ ca kleśo bahutaro bhavet ॥

Also *cf. ibid*: śl. 57, ff.

*Cf. Nyāyamañjarī*, Vol. I, p. 192 :

atha krīḍārthe jagatsarge bhagavataḥ pravṛttirīdṛśā ca śubhāśubharūpeṇa jagatā sṛṣṭena krīḍati parameśvara ityucyate, tarhi krīḍāsādhyasukharahitatvena sṛṣṭeḥ pūrvamavāptasakalānandatvaṁ nāma tasya svarūpamavahīyate;

na ca krīḍāpi niśśeṣajanatātaṅkakāriṇī ।
āyāsabahulā ceyaṁ kartuṁ yuktā mahātmanaḥ ||

tasmānna jagatāṁ nātha īśvaraḥ sraṣṭā saṁhartāpi bhavati.

Also *cf. ibid*: p. 194:

ata eva nirīkṣya durghaṭaṁ jagato janmavināśaḍambaraṁ ।
*na kadācidanīdṛśaṁ jagat* kathitaṁ nītirahasyavedibhiḥ ॥

स्वभावः[1], स्वातन्त्र्यं प्रकटितमहो §संप्रति विभोः ।
अभिप्रेतं किञ्चिद्यदयमसमीक्ष्यैव† कुरुते
जगज्जन्मस्थेम[2]प्रविलयमहायासमवशः ॥

*अनुकम्पाप्रयुक्तेन सृज्यमानाश्च जन्तवः ।
सुखिनः किं न सृज्यन्ते[3] ? तत्कर्मापेक्षया यदि ॥

---

[1] All printed texts and manuscripts read स्वभावस्वातन्त्र्यम् as one word except the ms. 'B', whose reading is selected by us.

[2] $M_2$ reads प्रलय

[3] $M_1$, $M_2$, $M_4$, My & B—दृश्यन्ते

---

§ 'सम्प्रति' सम्यगित्यर्थः । जगत्सृजनं भगवतः स्वभावश्चेदुच्यते, तर्हि सम्यगेव तस्य स्वातन्त्र्यं प्रतिपादितं भवद्भिरिति सोपालम्भमाह । तदा तु भगवान् परतन्त्र एव स्यादित्याशयः ।

† स्वभावत्वादेव असमीक्षोपपद्यते ।

* *Vide Ślokavārtika,* under I. i-5, śls. 52, 53 :
abhāvāccānukampyānāṁ nānukampāsya jāyate ।
sṛjecca śubhamevaikaṁ anukaṁpāprayojitaḥ ॥
athāśubhād vinā sṛṣṭiḥ sthitirvā nopapadyate ।
ātmādhīnābhyupāye hi bhavet kiṁnāma duṣkaraṁ ?

*Cf. Īśvarasiddhi,* pp. 244-245 :
svārthakāruṇyabhāvena vyāptāḥ prekṣāvataḥ kriyāḥ ।
īśvarasyobhayābhāvāt jagatsargo na yujyate ॥

avāptakāmatvānna tāvadātmārthe sṛjati; pralayasamaye pralīnasakalakaraṇakalebarādibhogopakaraṇatayā ca cetanānāṁ duḥkhābhāvāt duḥkhidarśanajanitakṛpāprayuktirapi nāstīti vyāpakabhūtasvārthakāruṇyanivṛtteḥ vyāpyabhūtayā prekṣāvatpravṛttyāpi nivartitavyam;

sukhaikatānaṁ janayet jagat karuṇayā sṛjan ।
tatkarmānuvidhāyitve hīyetāsya svatantratā ॥

*Cf. Nyāyamañjari,* Vol. I. p. 192 :

avāptasarvānandasya rāgādirahitātmanaḥ ।
jagadārabhamāṇasya na vidmaḥ kiṁ prayojanam ॥

anukampayā pravartata iti cet, maivam—

sargāt pūrvaṁ hi niśśeṣakleśasaṁsparśavarjitāḥ ।
nāsya muktā ivātmāno bhavanti karuṇāspadam ॥
... ... ... ... ... ... ... ... ... ...
karuṇāmṛtasaṁsiktahṛdayo vā jagat sṛjan ।
kathaṁ sṛjati durvāraduḥkhaprāgbhāradāruṇam ?



§ततः स्वतन्त्रताहानिः; किञ्च तैरेव हेतुभिः† ।
उपपन्नेऽपि वैचित्र्ये, किं तत्कल्पनयाऽनया ?

[ वेदानां नित्यत्वसमर्थनपूर्वकमपौरुषेयत्वप्रतिष्ठापनम् ]

अतो नास्ति तादृशः पुरुषः, यस्समस्तजगन्निर्माणक्षमः, साक्षात्कृतधर्माधर्मो[1] वेदानारचयति । अपि च[2], यदि वेदाः केनचिदसृज्यन्त, ततः 'तेनामी विरचिता' इति तत्कर्ता स्मर्येत[3] । *न च जीर्णकूपादावि[4]वास्मरणं युक्तम्; युज्यते हि तत्र प्रयोजनाभावात् कर्तुरस्मरणम् । वेदे तु अनेकद्रव्यत्यागात्मकबहुतरायाससाध्यानि कर्माणि प्रत्ययिततरनिर्मातृ[5]स्मरणमन्तरेण के वा[6] श्रद्दधीरन् ? तथा हि—नित्या वेदाः, अस्मर्यमाणस्मरणार्ह[7]कर्तृकत्वात् । ये यथोक्तसाध्या न भवन्ति, ते यथोक्तसाधना अपि न भवन्ति, यथा[8] भारतादयः । अमी तु यथोक्तसाधना इति, यथोक्तसाध्या एव । तस्मादपौरुषेया[9] वेदा इति । स्वसिद्धान्ताभिनिवेशव्यामुग्धबुद्धिभिरभिहितमिदं—'यदनुभवनिबन्धनं वेदप्रामाण्यम्, तदनुभवनिबन्धनं पञ्चरात्रप्रामाण्यम्' इति ।

---

[1] PM—°धर्माधर्मौ

[2] My omits अपि च

[3] $M_1$ $M_8$—स्मर्येते

[4] T—°कूपादौ°

[5] $M_8$—°निर्मातृ°

[6] A, $M_1$, $M_2$, $M_3$, $M_4$, $M_5$, $M_7$, $V_1$ & $V_2$ omit वा

[7] My—°स्मरणार्थ°

[8] $M_1$—तथा

[9] $M_4$—°पौरुषेयाः

---

§ *Cf. Ibid:*

nānātmagataśubhāśubhakarmakalāpānapekṣaḥ sraṣṭā prajāpatiriti cet karmāṇyeva hi tarhi sṛjantu jaganti, kiṁ prajāpatinā ? athācetanānāṁ cetanānadhiṣṭhitānāṁ sraṣṭṛtvamaghaṭamānamiti teṣāmadhiṣṭhātā cetanaḥ kalpyata iti cenna; tadāśrayāṇāmeva cetanatvāt ta evādhiṣṭhātāro bhaviṣyanti; kimadhiṣṭhātrantareṇeśvareṇa kāryam ?

† हेतुभिः—कर्मस्वभावादिभिः ।

* *Cf. Śābarabhāṣya* under I. i-5; p. 12 :
na ca himavadādiṣu kūpārāmādivat asmaraṇaṁ bhavitumarhati..

[ नैयायिकमुखेन वेदापौरुषेयताविचारः ]

*ननु च[1] किमिदमपौरुषेयत्वं वेदानाम् ? यदि नित्यवर्णारब्धत्वं समानमिदं पञ्चरात्र[2]तन्त्राणाम्[3] । अथ पदानां नित्यता, साऽपि समानैव । न [4]चानुपूर्वीनित्यता । न हि नित्यानामानुपूर्वी[5]स्वभाव उपपद्यते । उच्चारणानुपूर्व्यात्[6] आनुपूर्वी वर्णानामिति चेत्, सा तर्हि तदनित्यत्वादेवानित्येति[7] कः खलु विशेषः पञ्चरात्रश्रुत्योः ?

[ मीमांसकेन स्वमतव्यवस्थापनम् ]

§अयमेव विशेषो यदेकत्र स्वतन्त्र एव पुरुषः तां तामानुपूर्वी[8] रचयति; इतरत्र[9] परतन्त्रो नियमेन पूर्वाध्येतृसिद्धामेव विवक्षति । †क्रमावान्तरजातिश्च प्रत्यभिज्ञाबलप्रतिष्ठिता नापलापमर्हतीत्यलं विस्तरेण[10] । सिद्धमिदं न विलक्षणपुरुषानुभवनिबन्धनप्रामाण्यवर्णनं[11] साधीय इति ।

[ मीमांसकेन पञ्चरात्रस्य वञ्चकपुरुषकृतिमात्रत्वनिगमनम् ]

यतो न साक्षात्कृतपुण्यपापः
पुमान् प्रमाणप्रत्तिपन्नसत्त्वः[12] ।
अतो जगन्मोहयितुं प्रणीतं
नरेण केनाऽपि हि तन्त्रमेतत् ॥

[1] $M_2$ omits च; $M_3$ omits ननु च

[2] $M_1$—पाञ्चरात्र°

[3] $M_2$—पञ्चरात्राणाम्

[4] $M_3$—न वा°

[5] A, B, $M_1$, $M_3$, $M_4$, $M_5$, $M_6$, $M_7$, T, $V_1$, $V_2$—°आनुपूर्व्यम्°; $M_2$—°आनुपूर्वम्°

[6] $M_1$—उच्चारणापूर्वात्°

[7] $M_2$—तदनित्यत्वानित्येति

[8] B, $M_4$—°अनुपूर्वीम्

[9] $M_1$—उत्तरत्र

[10] A, B, $M_1$, $M_3$, $M_5$, $M_6$, $M_7$, P, PM, T, $V_1$, $V_2$ read प्रविस्तरेण

[11] B, $M_1$, $M_2$, $M_4$, $M_7$ omit वर्णनं and read °प्रामाण्यम्

[12] $M_1$, $M_2$, $M_4$, $M_7$, My, & B— °सत्तः

* The Naiyāyika tries to examine the revealed character (*apauruṣeyatva*) of the Vedas, which the Mīmāṁsaka so zealously champions.

§ This is how the Mīmāṁsaka vindicates his contention.

† 'अवान्तरजाति 'रित्यस्य वैलक्षण्यमित्यर्थः । क्रमनियमानियमाभ्यामेव वेदपञ्चरात्रयोर्वैलक्षण्यं सुस्पष्टमित्याशयः ।



[ नैयायिकेन स्वोक्तार्थे वेदान्तप्रामाण्यकथनम् ]

*ननु च केवलतर्कबलादयं
यदि सिसाधयिषापदमीश्वरः ।
भवतु नाम तथा सति दूषणं
श्रुतिशिरःप्रमितो हि महेश्वरः ॥

यदा तु सकल[1]भुवननिर्माणक्षमसर्वज्ञसर्वेश्वरपरम[2]पुरुषप्रतिपादकानि §नित्यागमवचनान्येव बहुलमुपलभ्यन्ते, कथं तदा[3] तदनुभवमूलस्मरणप्रामाण्यानङ्गीकरणम् ?

[ सिद्धे वस्तुनि प्रामाण्यं नास्तीति प्राभाकरमतोपक्षेपः, तन्निरासश्च ]

‡न च परिनिष्ठित[4]वस्तुगोचरतया तानि प्रमाण[5]मर्यादामतिपतन्ति[6] । तादृशामपि प्रमाणान्तरसम्भेदातिदूरगोचराणां पौरुषेय[7]वचसां स्वरस[8]समासादितप्रामाण्यवारणा[9]योगात् ।

न च सिद्धे वस्तुनि साधकबाधकयोरन्यतरोपनिपातसम्भवप्रसक्त[10]:, भावितानुवादविपर्ययपर्यालोचनया, तद्गोचरवचसां[11]

[1] My—निखिल°

[2] $M_3$ omits म

[3] $M_1$ & $M_2$ omit तदा

[4] T, $V_2$—परिनितिष्ठित°

[5] $M_6$—प्रामाण्य°

[6] $M_6$—आपतन्ति

[7] A, $M_2$, $M_4$ $M_5$, & B—अपौरुषेय°

[8] $M_2$—परस्पर°

[9] $M_2$—°प्रामाण्यवादितारण्य°
B—°प्रामाण्यवादितावतरण°

[10] $M_3$—°प्रसक्ते

[11] P, PM, T, $V_1$, $V_2$, A, $M_3$, $M_5$ & $M_6$—°वचसः

* The Naiyāyika tries to uphold the validity of the Āgama, on the ground that its author, the Supreme Person, is glorified in the Upaniṣads.

§ *Cf.* Vātsyāyana's commentary on the *Nyāyasūtra*, under IV. i. 21, p. 293 :

āgamācca draṣṭā boddhā sarvajñātā īśvaraḥ.

‡ The Prābhākara's position with regard to the authority of statements speaking of a past event (*siddha* or *pariniṣṭhitavastu*) is criticised by the Naiyāyika here.

प्रामाण्यप्रच्युतिः; कार्यनिष्ठस्यापि तत्प्रसङ्गात् । कार्यमपि हि[1] मानान्तरवेद्यमेव लौकिकं समिदाहरणादि[2] । ¶'तच्च मानान्तरेणापि वेद्यमोदनपाक[3]वत्' इत्यभ्युपगमात् ।

*अथ विलक्षणाग्निहोत्रादिविषयकार्यस्यासंभावितमानान्तरतया तत्प्रतिपादयत् वचः प्रमाणम्, हन्त तर्हि निरतिशयावबोधैश्वर्यमहानन्दसन्दोहवपुषि भगवति न मानान्तरसम्बन्धगन्ध[4] इति सर्वं समानमन्यत्राभिनिवेशात्§ ।

अपि च, प्रवृत्तप्रमाणान्तरमपि स्वगोचरं, तद्गोचरतया नावभासयतीति[5] परमपि प्रमाणमेव । कुतः तदुपनिपातसम्भावनयाऽनुवादत्वम्? कथं वा प्रत्यस्तमितसमस्तपुरुषाशयदोषसंस्पर्शनित्यागमभुवः प्रत्ययस्य पूर्वोपमर्दकतया† उन्नीयमानस्य, सम्भाव्यमानविविधविप्लवैः प्रमाणान्तरैरपवादापादनमिति यत्किञ्चिदेतत् ।

---

[1] $M_2$ & My omit हि

[2] $M_3$—समिदाहरणानि

[3] $M_3$—°पान°

[4] $M_1$, $M_2$, $M_4$, $M_7$, My & B omit गन्ध; P & PM read °गन्धसम्बन्धः

[5] $M_1$ $M_2$, $M_4$, $M_7$, My, & B-नावगमयतीति

---

¶ *Vide Prakaraṇapañcikā* II. p. 180:

kṛtisādhyaṁ pradhānaṁ yat, tat kāryamavasīyate
tacca mānāntareṇāpi vedyamodanapākavat.

* Statements like "agnihotraṁ juhoti" (*Taittirīya Saṁhitā*: V. 9. 1) speak of "agnihotra", which is a *siddhavastu*, but not a *kārya*. This, according to the Prābhākara, should not be primarily valid. But actually, he accepts its primary validity on the ground that such statements are the only means of revealing the instrumentality of fire-sacrifice with regard to heaven and such other fruits. When this is the case, the Naiyāyika sees no reason why the Prābhākara should not approve the validity of statements which speak of the existence of a Supreme Being.

§ आग्रहे परं भेदः । तेन विना त्वदीयं मतं मदीयेन तुल्यमेवेति भावः ।

† पूर्वमवगतस्य तन्त्रसामान्यज्ञानस्य उपमर्दकतया इति यावत् ।



[ श्रुतिप्रसिद्धभगवत्प्रणीतस्य पञ्चरात्रस्य निर्दोषत्वप्रतिपादनम् ]

इत्थं च श्रुतिशत[1]समधिगतविविधबोधैश्वर्यादिवैभवे भगवति सामान्यदर्शनावसिता[2]सार्वज्ञ्यविग्रहवत्तादयो[3] दोषा नावकाशमश्नुवते हुतभुजीव शैत्यादयः । ततश्च—

श्रुतिमूर्ध्नि प्रसिद्धेन सर्वज्ञेनैव निर्मितम् ।
तन्त्रं मिथ्येति वक्तुं नः कथं जिह्वा प्रवर्तते ?

[ प्राभाकरेण स्वमतसमर्थनम् ]

*अहो मन्दस्य मीमांसाश्रमहानिः विजृम्भते[4] !
मीमांसामांसलं चेतः कथमित्थं प्रमाद्यति ?
§कार्ये मानान्तरापूर्वे समस्तं वैदिकं वचः ।
प्रमाणमिति हि प्राज्ञा मन्यन्ते मान्यबुद्धयः ॥
पदानां तत्परत्वेन व्युत्पत्तेरवधारणात् ।
न खल्वन्यपरे शब्दे व्युत्पत्तेरस्ति सम्भवः ॥

[ पदानां कार्यपरत्वसमर्थनम् ]

तथा हि—वृद्धयोर्व्यवहरतोः एकतरवृद्धप्रयुक्तशब्दश्रवणसमनन्तरजनितान्यतरवृद्धसमवेत[5]चेष्टां दृष्ट्वाऽन्यथानुपपत्त्युन्नीयमाना[6] शब्दशक्तिः, तदुपपादककार्यपर्यवसायिन्येवावसीयते । प्रतीता[7] हि स्वकार्यसन्ताने कार्यसंविदेव तत्तद्विशिष्टचेष्टाहेतुतया । तदयमिहापि तादृशीं प्रवृत्तिं पश्यन्नेवमाकलयति—'नूनमितस्सकाशादस्य कार्यसंविदाविरासीत्, यदयमेतदनन्तरं प्रवर्तत' इति ।

---

[1] $M_3$—श्रुतिमत°

[2] $M_3$—°अवस्थित°

[3] $M_4$—°विग्रहवत्त्वादयः

[4] My—°श्रमहानिविजृम्भिते

[5] $M_6$ & $V_2$ add चेतन

[6] $M_2$, My—°उन्नीयमान°
$M_3$—अन्यथानुपपत्तिर्जायमाना

[7] $M_1$—प्रतीतिः

---

* The Prābhākara explains his position at great length.

§ *Cf. Prakaraṇapañcikā* V, p. 93:

sarvapadānāmeva hi svābhāvikī vṛddhavyavahārasiddhā kāryaparatā, lākṣaṇikī ca siddhaparateti.

एवं च समस्तव्यवहारानुगतप्रवृत्तिनिमित्तकार्यप्रतिपादनपरतया व्युत्पन्ने शब्दे यत्पदावापोद्धारानुयायिनो येऽर्थ[1]भागाः, ते प्रथमावगतप्रधानभूतकार्यानुगुणतया तैस्तैरभिधीयन्त इत्यध्यवस्यति। §तत्र च लिङादयोऽव्यभिचरितकार्यसंविदः, कार्यशरीरमेव साक्षात् समर्पयन्ति। लङादयस्तु[2] तदपेक्षिताधिकाराद्यनुबन्धप्रतिपादनमुखेन तत्समन्वयमनुभवन्तीति।

*न च पुत्रजननादिस्वरूपावेदन[3]पर्यवसायिनः पदनिचयस्याविरलपुलकोदयवदनविकासादिभिः, अभिमतसुत[4]जन्मादिप्रतिपादनशक्तिनिश्चयः। अजातातिवृत्तप्रत्युत्पन्नविविध[5]हर्षहेतूपनिपातेऽ‡यममुनेति[6] निर्धृत्य प्रतिपत्तुमशक्यत्वात्।

एतेन †व्युत्पन्नेतरपदसमभिव्याहृतवर्तमाननिर्देशेऽपि[7] कार्यैदम्पर्यविरहितपदशक्तिनिश्चयप्रति[8]विधिरनुसन्धातव्यः।

[1] $M_4$, My & B omit अर्थ
[2] P, PM, T, $V_2$— तिङादयस्तु
$M_1$, $M_2$, $M_7$, My, B—लङादयस्तु
A, $M_5$, $V_1$—लिङादयस्तु
[3] $M_1$, $M_2$, $M_4$, $M_7$, My, B—°निवेदन°
[4] $M_1$, $M_7$ omit त
[5] A omits विविध; 'B' adds विध
[6] P—°अमुयेति; $M_2$—°अमृत इति
T, $M_1$, $M_6$, $M_7$, My, $V_1$, $V_2$ & B—°अमुतेति
[7] $M_4$, B—°निर्दिश्येऽपि
[8] $M_1$, $M_2$, $M_4$, $M_7$, My, B—omit प्रति

§ *Cf. Prakaraṇapañcikā* V, p. 91:

tatra liṅādipratyayo niyogārthaśarīramevābhidadhāti, prakṛtistadviṣayaṁ; padāntarāṇi ca viṣayaviśeṣaṇaṁ nāmadheyaṁ niyojyaṁ ca abhidadhātīti.

* *Cf. ibid.* V, p. 93:

tathāpi putraste jāta iti vākyasya putrajanmākhyaharṣahetupratipādakatā harṣahetūnāmānantyāt duranumānā; na ca pāriśeṣyeṇa tatpratipādakatvādhyavasāyaḥ; bhūtabhaviṣyadvartamānānāṁ sannihitavyavahitānāṁ pāriśeṣyāvadhāraṇāyā atyantaduṣkaratvāt.

‡ 'अयं हर्षः अमुना हेतुना जात' इति न निर्धारयितुं शक्यमिति।

† *Cf. Prakaraṇapañcikā* V, p. 92:

vyutpannetarapadavibhaktyarthāḥ kāṣṭhaiḥ pacati iti vartamānopadeśepi yat pāke karaṇaṁ, tat kāṣṭhaśabdena pratipādyata ityavagamya pratyakṣeṇa kāṣṭhānāṁ karaṇabhāvamavagacchantaḥ kāṣṭhaśabde vyutpadyante.



§पदान्तराणि याद‍ृङ्क्षि व्युत्पद्यन्ते च ताद‍ृशम्।
इदं च पदमित्येव[1] तत्र व्युत्पद्यते नरः॥

तानि कार्यान्वितस्वार्थ[2]बोधकानीति साधितम्[3]।
*अथ[4] तद्बुद्धिहेतुत्वात्§ प्रामाण्यं[5] भूत[6]गोचरम्॥

इष्यते[7], तदनैकान्तं[8] पदेष्विति[9] न शोभते।
अथ तत्परता† हेतुः[10], ततश्च स्यादसिद्धता[11]॥

न हि अकार्यरूपे वस्तुनि कचिदपि[12] शाब्दी[13] बुद्धिः पर्यवस्यति। याः पुनः लौकिकशब्दश्रवणसमनन्तरभाविन्यः अन्वयावगतयस्ता आनुमानिक्यो[14]ऽभिहिता[15] न शाब्द्य इत्युपपद्यत एव तासामतत्पर्यवसानम्‡।

यदि तत्परताग्राहः शब्दानां नैव विद्यते।

[1] $M_3$, $M_6$, $V_2$—°इत्येवम्
[2] $M_4$—°स्वार्थ°
[3] PM reads this line immediately next to the line 'पदान्तराणि' etc.
[4] My—भतः
[5] $M_2$—भतबुद्धिहेतुत्वात्प्रामाण्यम्
[6] $M_4$—बुद्धि°
[7] $M_1$, $M_2$, $M_4$, $M_7$, My, B—उच्यते
[8] P, PM, T, $M_2$, $M_6$, $M_7$, My, $V_1$, B—तदनैकान्तम्
[9] $M_1$—पदेष्वति
[10] My—°तत्परतायां तु
[11] $M_4$—°असिद्धिता
[12] My—काचिदपि
[13] $M_3$—शाब्दिक°
$M_6$—शाब्द°
[14] $M_3$—आनुमानिन्यः
[15] $M_2$—आनुमानिक्यो हि ताः;
$M_3$—°उदिताः

§ *Cf. Prakaraṇapañcikā* II, p. 179:

śabdāntarāṇi svārtheṣu vyutpadyante yathaiva hi।
āvāpodvāpabhedena tathā kārye liṅādayaḥ॥

* The Mīmāṁsaka poses two alternatives to refute the validity of statements referring to existent factors.

§ "Tadbuddhihetutvāt" means "bhūtavastuviṣayakajñānajanakatvāt".

† "Tatparatā" means "bhūtavastuparatā".

‡ According to the Prābhākara, all statements made by human beings are only inferential in character and as such, cannot be primarily valid.

×‘ अग्निहोत्रं जुहोती’ति विधिः कस्मादुपेयते ?
अथ तत्र प्रमाणत्वे संवृत्तेऽपि च तावता ।
पुरुषार्थत्वलाभाय[1] विधिरभ्युपगम्यते ॥

तदसत्—न प्रमाणानां प्रयोजनवशानुगा ।
प्रवृत्तिः, किन्तु तन्मूलः[2] प्रयोजनपरिग्रहः ॥

§न खलु कनकमभिलषतः शिला[3]वलोकनमनभिमतमिति[4] कनकावलोकनता आश्रयितुमुचिता ।

तात्पर्यमेव शब्दानां यावत् कार्ये न कल्पितम्[5] ।
न तावत् वर्तमानादिनिर्देशे[6] विधिकल्पनम् ॥

[ उपनिषद्वाक्यानां कार्यसमन्वयप्रकारकथनम् ]

*एवं चोपनिषदामपि तत्र तत्राम्नायमानज्ञानोपासनादिविधि[7]-शेषतया[8]ऽर्थो व्याकरणीयः । तदयमर्थः—‘ सर्वज्ञमानन्दमात्मानं जानीयात् ’ इति ।

---

[1] $M_1$—°लाभोऽयम्
[2] P, PM—तन्मूल°
[3] My adds शकल
[4] A, $M_2$, $M_5$, $M_6$—°अभिमतमिति
[5] $M_3$—न खल्विति
[6] $M_1$, $M_2$, $M_3$, $M_7$, B—°निर्देश°
[7] $M_1$, $M_2$, My add विशेष
[8] $M_3$, $M_4$, B—°विशेषतया°

---

× *Taittirīya Saṁhitā* V. 9. 1.

§ *Cf. Tantravārtika* under I. ii 1, p. 2 :

na hi loṣṭaṁ paśyataḥ taddarśanaṁ niṣprayojanamiti suvarṇadarśanatā kalpyate.

Veṅkaṭanātha quotes this passage in his *Śeśvaramīmāṁsā* under I. ii. 1, p. 57.

* *Cf. Prakaraṇapañcikā* V. p. 93, ff:

ataśca vedāntānāmapi ātmā jñātavya ityapunarāvṛttaye samāmnātena vidhinā ekavākyatāmāśritya kāryaparatvameva varṇanīyam....api ca siddhārthaparatvepi śabdasya na vedāntānāṁ paramānandādirūpatve brahmaṇaḥ prāmāṇyamavakalpate; tatra hi bramasvarūpānuvādenānandādirūpavidhirāstheyaḥ.



†न च तावता स्वरूपमपि सिद्ध्यतीत्यध्यवसेयम् । असत्येव रूपे तादृशि तथाविधानोपपत्तेः । यथैतत्[1] *‘ अपितर्येव[2] पितरं[3] जानीयात् ’ इति, तथा च § ‘ अनुद्गीथ[4] ओङ्कारे उद्गीथविधानम् ’ इति ।

[ भूतपरवाक्यस्याप्रामाण्यनिगमनम् ]

यानि पुनरात्मसत्यत्व[5]नित्यत्व[6]वादीनि[7] वाक्यानि, तान्यविशेषित[8]कालकर्म[9]विधाना[10]क्षिप्यमाणामुष्मिकफलभोगोचितचेतनकर्तृप्रतिपादनपराणि । अतो न किञ्चिदपि वचो भूतेऽर्थे[11] प्रमाणम् ।

‡अत एवा[12]र्थवादानामपि[13] परिनिष्ठितरुद्ररोदनादिप्रति-

---

[1] My—यथैव°
[2] $M_1$—यथैतदपि तथैव
[3] B—यथैतदपितरम्
[4] $M_3$—°उद्गीथ°
[5] $M_3$ omits त्व
[6] $M_1$ omits नित्यत्व
A reads °नित्यत्वसत्यत्व°
[7] $M_2$—°आपादीनि
[8] $M_1$—°विशेषित°
[9] $V_2$—°धर्म°
[10] $M_1$, $M_2$, $M_4$, $M_7$, My, B—°विशेष°
[11] $M_1$, $M_7$—भूतार्थे
[12] P, PM—अतस्सर्व°
[13] $M_3$, $M_6$—°अर्थवादपदानामपि

---

† The Mīmāṁsakas do not accept the existence of any deity that receives the offerings of the votaries and rewards them.

*Cf. Prakaraṇapañcikā* V. p. 94:

brahmasvarūpaṁ ca pramāṇāntarasiddhamevāśrayaṇīyaṁ; brahmaśabdasya ca loke pramāṇāntarasiddhātmavācitvena siddheḥ vedepi sa evārthaḥ; tathā ca sati nityaprakāśaparamānandādirūpavidhiḥ sakalapratipattiviruddhaḥ; sarvapratipattiṣu hi pramāṇasmṛtibhūtāsvātmā prakāśate; na ca tatra paramānandaḥ saṁvedyate; na ca sāṁsārikaduḥkhābhibhūtatvāt tasyāprakāśaḥ, abhibhavānupapatteḥ; avacchinnaṁ hi duḥkhaṁ anavacchinnānanda iti nālpīyasā mahataḥ abhibhavaḥ saṁbhavati; svaprakāśasya ca abhibhavāvaraṇānabhivyaktīnāṁ asambhava eva;....sakalavikāraśūnyatāpi vijñānādivikārotpatteḥ pramāṇāntaraviruddhaiveti parasparānvayāyogyatayā nānandādiparatvaṁ; ajarāmaratvayostu pramāṇāntaraprasiddhereva anuvādatvāt aprāmāṇyamiti.

* लौकिकमिदमुदाहरणम् । वैदिकमपि दर्शयति ‘ अनुद्गीथ ’ इति ।

§ See *Chāndogyopaniṣad* I. 5 : atha khalu ya udgīthaḥ sa praṇavo, yaḥ praṇavaḥ sa udgītha iti. See Raṅgarāmānuja's commentary on it.

‡ For instance, for the *arthavāda* statement “ so ’ rodīt yadarodīt tat rudrasya rudratvam ” ( *Taittirīya Saṁhitā* : I. v. i. 1 ), the corresponding *vidhi*-sentence is “ barhiṣi rajataṁ na deyam ” ( *Ibid*: I. v. i. 2 ).

पादनपरतावारणोपपादनेन विदूरतर[1]वर्तिविधिपदान्वयः[2] स्तावक-तयाऽपि प्रदर्शितः । तस्मादपर्यालोचितपूर्वापरपदतात्पर्याणामापाता-यातश्रद्धाविरचितवि[3]ग्रहोऽयमुद्ग्राहितः[4] पुरुष इत्यलमति[5]विस्तरेण।

सिद्धमिदं, न श्रुतितोऽप्यभिमतपुरुषाति[6]शयः सिद्ध्यतीति ।

[ प्रामाण्यस्वीकारेऽपि, सार्वज्ञ्यज्ञापकत्वासम्भवकथनम् ]

अपि च, भवतु भूतमपि वस्तु शास्त्रस्य विषयः । अथ च कथमिव चोदना[7]जनित[8]धियमवधीर्य[9] धर्माधर्मौ[10] विजानाति कश्चि-दित्यभ्युपेयते ? *सर्वज्ञता[11] हि[12] प्रसिद्धैरेव[13] प्रमाणैः, यथायथमर्था-नवगच्छतोऽपि सङ्गच्छते । §न हि तदस्ति वचनं, यदस्य प्रसिद्ध-बुद्ध्युत्पादनहेतुहान[14]मुखेन सार्वज्ञ्यं ज्ञापयति ।

1 A omits तर
2 All printed texts and manuscripts omit the ' visarga '.
3 A omits वि
4 B—°उदगृहीतः
5 B—इत्यलमिति; $M_3$, $M_4$—omit अति
6 B—°पुरुषाधि°
7 $M_3$—चेतना°
8 $M_1$, $M_4$, $M_7$, My, B—चोदनार्जित° $M_2$—चोदनाजित°
9 $M_3$—°अधीय
10 $M_2$, My add न
11 $M_4$—सर्वज्ञत्वम्
12 B—सर्वज्ञत्वार्हं°
13 $M_1$, $M_7$—प्रसिद्धेरेव
14 A, $M_3$, $M_5$, $M_6$, $M_7$, $V_1$, $V_2$—°भान°

* *Cf. Ślokavārtika* under I. i. 2, śls. 111b-117:
yadi ṣaḍbhiḥ pramāṇaissyāt sarvajñaḥ kena vāryate ?
ekena tu pramāṇena sarvajño yena kalpyate ।
nūnaṁ sa cakṣuṣā sarvān rasādīn pratipadyate ॥
yajjātīyaiḥ pramāṇaistu yajjātīyārthadarśanaṁ ।
bhavedidānīṁ lokasya tathā kālāntare 'pyabhūt ॥
yatrāpyatiśayo dṛṣṭaḥ sa svārthānatilaṅghanāt ।
dūrasūkṣmādidṛṣṭau syānna rūpe śrotravṛttitā ॥
bhaviṣyati na dṛṣṭaṁ ca pratyakṣasya manāgapi ।
sāmarthyaṁ nānumānāder liṅādirahite kvacit ॥
sarvajñakalpanādyaistu vede cāpauruṣeyatā ।
tulyatā kalpitā yena tenedaṁ sampradhāryatām ॥
sarvajño dṛśyate tāvannedānīmasmadādibhiḥ ।
nirākaraṇavacchakyā na cāsīditi kalpanā ॥

§ *Cf. ibid.*, śl. 118.
na cāgamena sarvajñastadīye 'nyonyasaṁśrayāt ।
narāntarapraṇītasya prāmāṇyaṁ gamyate katham ?



*यद्यपि किञ्चिदभविष्यत्, तथाऽपि परस्परान्वयानुचित-पदार्थतया †अर्थवादतयैव समर्थनीयम् । §प्रमाणान्तरावगत[1]योग्य-[2]तादि[3]पुरस्सरी पदेभ्यो[4] वाक्यार्थबुद्धिरुप[5]जायमाना प्रथमतर[6]नि-पतिता[7]पेक्षितप्रमाणान्तर‡विरोधे कथमिव जनिमनुभवतीति सम्भा-वयामः ?

[ प्रत्यक्षादिविरोधेन सार्वज्ञ्याभ्युपगमायोगत्वकथनम् ]

प्रत्यक्षादिप्रतिक्षिप्तगोचरं वचनं यदि ।
प्रमाणं, को नु तादात्म्यं[8] विहन्त्यादित्ययूपयोः$ ?

1 $M_1$—°आगत°; $M_6$—°अवगम°
2 $M_8$ omits योग्यता
3 A, $M_7$—°योग्यत्वादि°
4 $M_2$, My—पथेभ्यो
5 $M_1$—°रूप°
6 $M_3$, $M_6$—प्रथमतरम्°
7 A, $M_7$, $V_2$—°निपातित°
8 B—तादर्थ्यम्

* The Mīmāṁsaka has in mind, statements like "yassarvajñaḥ sarva-vit" (*Muṇḍaka* : I-9) and "na tasya kāryaṁ karaṇaṁ ca vidyate, svābhāvikī jñānabalakriyā ca" (*Śvetāśvatara* : VI-8), which declare that there does exist an Omniscient Being and that His Omniscience is natural but not due to any extraneous factor.

† *Cf. Ślokavārtika*, I. i. 2, śls. 118-120:
na cāgamena sarvajñastadīye 'nyonyasaṁśrayāt ।
narāntarapraṇītasya prāmāṇyaṁ gamyate katham ॥
na cāpyevaṁparo nityaḥ śakyo labdhumihāgamaḥ ।
nityaścedarthavādatvaṁ tatpare syādanityatā ॥
āgamasya ca nityatve siddhe tatkalpanā vṛthā ।
yatastaṁ pratipadyante dharmameva tato narāḥ ॥

§ By the term "pramāṇāntara" here is meant "śabda".

‡ The term "pramāṇāntara" here means "pratyakṣa".

$ *Vide Taittirīya Brāhmaṇa*: II. i.5.2 : "ādityo yūpaḥ".

The argument is that if perception were not taken as the guiding principle in ascertaining the connotation of passages, one would have to literally identify the Sun and the sacrifical post on the authority of the text "ādityo yūpaḥ", which is a eulogistic passage. But their identity is disproved by perception itself. Likewise, Omniscience is also to be disproved.

अपि चास्तु[1] नरः कश्चित् तादृशातिशयाश्रयः ।
सिसाधयिषितग्रन्थप्रामाण्यस्य किमागतम् ?

ननु च तादृशपुरुषेण विरचितमिदमि[2]ति पञ्चरात्रगोत्रानुसारिणः स्मरन्ति ।

[ सर्वज्ञपुरुषनिर्णयासम्भवत्वकथनम् ]

पाशुपता वा किं न स्मरन्ति ? तेऽपि स्वदर्शनादर्शकमखिलजगदध्यक्षमाचक्षते । तथाऽन्येऽपि[3] । न च[4] सर्वेऽमी सर्वज्ञाः, विरुद्धार्थोपदेशानुपपत्तेः । य एव च वादिनामेकस्य वादिनः सर्वज्ञ[5]सिद्धौ[6] हेतुर्भवति, स सर्वेषां साधारणः । तदिह बहुषु[7] परस्परविरुद्धमर्थमहमहमिकया उपदिशत्सु कतमं[8] सर्वज्ञमध्यवस्यामः[9] ?

यथाऽऽह—

* 'सर्वज्ञेषु च भूयस्सु विरुद्धार्थोपदेशिषु ।
तुल्यहेतुषु सर्वेषु को नामैको[10] निरूप्यताम् ॥' इति ।

† स्वतन्त्राधिगमाधीनं[11] सर्वज्ञपरिकल्पनम् ।
परस्परप्रतीघातात् सर्वाप्रामाण्यमावहेत् ॥

$ननु[12]—

[ विष्णुवैभवस्य श्रौतत्वाशङ्का ]

श्रुतिस्मृति[13]प्रसिद्धेन वासुदेवेन भाषितम्[14] ।

---

1 P, PM, T, A, $M_5$, $V_1$, $V_2$—°अस्ति; $M_6$—°आसीत्; $M_3$—°आस; $M_1$—°आस तु
2 $M_1$ & $M_7$ omit इदम्
3 $M_3$—°अन्ये च
4 $M_3$ omits न च
5 $M_6$ adds त्व
6 $M_1$—°सिद्धः
7 $M_1$ omits षु
8 $M_1$—कम्
9 P, PM, T—°अध्यवसामः
10 $M_1$, $M_4$, $M_7$, My, B—कोऽयमेको
11 $M_2$—°अधीन°
12 $M_3$, $M_6$ add च
13 $M_2$—°स्मृत°
14 A—भूषितम्

---

* To be identified.
† 'स्वतन्त्र' इत्यस्य 'स्वकीयतन्त्र' इत्यर्थो विवक्षितः ।
$ The Mīmāṁsaka anticipates the following argument from the Siddhāntin.



कथं तन्त्रान्तरैरेतत् तुल्यकक्ष्यां निवेक्ष्यते ?
तथा हि पौरुषे सूक्ते श्रूयते तस्य वैभवम् ।
†'पद्भ्यां भूमिर्दिशः श्रोत्रादि'त्यादीदं[1] तथाऽपरम् ॥
§'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' । इति ।

तथा—

‡'स[3] ब्रह्मा स शिव' इति, $'तद्विष्णोः परमं पदम्' ॥
¶'न तस्य कश्चित्पतिरस्ति लोके
न चे[4]शिता तस्य च नैव[5] लिङ्गम्' ।
इतीरयन्ति श्रुतयोऽस्य भूतिं
जगज्जनिस्थेमपिधान[6]चिह्नाम् ॥

*'विष्णोस्सकाशादुद्भूतं, जगत्तत्रैव च स्थितम् ।
स्थितिसंयमकर्तासौ' इत्याह स्म पराशरः ॥
इत्थं तमेव[7] सर्वेशं मनुरप्याह तद्यथा ।
×'नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम्' ॥ इति ।

---

1 A—°इत्युदितम्
2 $M_1$, $M_2$, $M_4$, My, B omit इति
3 B—सत्
4 $M_3$—न वा°
5 My—नैव च तस्य
6 P, PM, omit न
7 $M_1$ reads इत्थमेव, omitting तम्, in which case the line will be wanting in one syllable.

---

† *Ṛgveda* X. 90.41.
§ *Mahānārāyaṇa Up.* V. 7.
‡ *Ibid.* XI. 13.
$ *Kaṭhopaniṣad* III. 9; also *Maitrīyopaniṣad* VI. 26.
¶ *Śvetāśvatara Up.* VI. 9.
* *Viṣṇupurāṇa* I. i. 35. This verse declares that Viṣṇu is both the material and the instrumental cause of the universe.
× This verse does not occur in editions of *Manusmṛti* with the commentaries of Medhātithi and Kullūkabhaṭṭa. *Manvarthamuktāvali* of the Kāśī Sanskrit Series, however, has this verse inserted between the 10th and the 11th stanzas of the Ist Chapter.

[ विष्णुविरचितपञ्चरात्रस्य प्रामाण्यकथनम् ]

इत्थं नानाश्रुतिमुनिवचस्सन्ततस्तूयमान-
ज्ञानैश्वर्यः परमपुरुषः पञ्चरात्रं व्यधत्त[1] ।
तच्चेदेतत् श्रुतिपथ[2]परिभ्रष्टतन्त्रैस्समानं,
‡पातृत्वेन प्रसजति तदा सोमपस्ते सुरापैः[3] ॥

[ तत्प्रतिभटतया पशुपतिपारम्यप्रतिपादनसम्भवकथनम् ]

*नैतज्ज्यायः, किमङ्ग! श्रुतिषु भगवतो न प्रसिद्धा विशुद्ध-
ज्ञानैश्वर्यादिधर्माः[4] त्रिपुरविजयिनः? तेन यत्किञ्चिदेतत् ।
यद्वा, देवस्स एव त्रिभुवन[5]भवनत्राणविध्वंस[6]हेतुः
वेदान्तैकप्रमाणः कथयति स कथं वेदगोष्ठी[7]बहिष्ठम्?

तथा हि, भगवतः पशुपतेरपि सार्वज्ञ्य[8]सर्वैश्वर्यावेदिकाः[9] श्रुतयो बहुलमुपलभ्यन्ते—§'य[10]स्सर्वज्ञः[11] सर्ववित्', †'तमीश्वराणां परमं महेश्वरम्' इत्याद्याः ।

सर्वज्ञेश्वर[12]शब्दौ[13] च नर्ते देवात् पिनाकिनः ।
[14]उत्पत्तिशक्त्या वर्तेते, सत्यप्यन्यत्र तद्वति ॥

---

1 $M_3$—विधत्ते
2 $M_3$—°पथि
3 PM, $M_1$, $M_2$, $M_4$, $M_7$, $V_2$, B—सोमपास्ते सुरापाः
4 B—°धर्मः
5 $M_1$—त्र भुवन°
6 $M_1$—°वध्वंस°
7 $M_3$—वेदगुर्वी°
8 $M_2$—सार्वज्ञ्यम्; $M_3$—सर्वज्ञः
9 $M_2$, $M_6$—°आवेदकाः; B—°वेदिकाः
10 $M_4$ omits यः
11 P, PM add सः
12 $M_3$—सर्वेश्वर°
13 $M_4$, B—°शब्दः
14 My—the scribe explains उत्पत्ति as रूढि

---

‡ 'केवलं तन्त्रत्वसाम्यमादाय यदि पञ्चरात्रमपि अवैदिकमिति वक्तुमुत्सहसे, तर्हि, ते=तव प्रीतिपात्रं सोमपोऽपि, पातृत्वसाम्यमादाय, सुरापैः समानः प्रसजति' इत्यन्वयः । 'समान'पदं पूर्वपादादध्याहार्यम् । मीमांसकस्य पूर्वपक्षित्वादत्र सोमपदृष्टान्तः सरस इति च ध्येयम् ।

* The above argument of the Siddhāntin is refuted by the Mīmāṁsaka.

§ *Muṇḍakopaniṣad*: I. i. 9.

† *Śvetāśvatara:* VI. 7.



किञ्च सर्वज्ञ[1]शब्देन सर्वज्ञे प्रतिपादिते ।
*[2]पौनरुक्त्यं प्रसज्येत सर्वविद्ग्रहणस्य[3] वः[4] ॥
अतस्सर्वज्ञशब्दोऽयं महादेवैकगोचरः ।
तथा च स्कन्द[5]लिङ्गादिपुराणानि पिनाकिनः ॥
उपक्षीणानि सार्वज्ञ्य[6]सर्वैश्वर्योपपादने ।
ततश्च तत्प्रणीतत्वात् प्रामाण्यमनया दिशा ॥
प्राप्तं पाशुपतं तन्त्रं, तन्त्रा[7]न्योन्यविरोधतः[8] ।
सर्वतन्त्रप्रमाणत्व[9]विपर्यासः प्रसज्यते[10] ॥

अपि च[11] भवतु भगवान् वासुदेव एवौपनिषदः पुरुषः । अथ च स कथमिव[12] श्रुतिपरिपन्थि[13] तन्त्रमेतत् प्रणयेते[14]त्युत्प्रेक्ष्येत[15], य एवमाह—†'श्रुतिस्मृती[16] ममैवाज्ञा[17]' इति । ततश्च—

---

1 $M_3$—सर्वंभू°
2 $M_1$ & $M_7$ omit from पौनरुक्त्यं upto नापि मन्वादि below
3 My—°दूषणस्य
4 $M_6$—च
5 $M_2$, $M_5$, $M_6$, My—स्कान्द°
6 $M_3$—सर्वज्ञ°
7 My—°तन्त्रतन्त्र°
8 B—°विरोधितः
9 $M_2$—तत्सर्वतन्त्रप्रामाण्य°
10 B—प्रयुज्यते
11 B omits अपि च; A reads अपि वा
12 $M_3$ omits इव
13 A, $M_3$, $M_5$, $V_2$—°परिबन्धि°
14 B, $M_3$—प्रणीयते°
$M_2$, $M_4$, My—प्रणीयेत°
15 My—उत्प्रेक्षेत
16 $M_2$, My—श्रुतिस्मृतिः; PM—श्रुतिस्मृति°
17 P, PM, $M_2$, $M_4$, $M_5$, $M_6$, $V_1$, $V_2$, B—आज्ञे

---

* The above argument, says the Mīmāṁsaka, is favourable to the Pāśupatas since the text "yassarvajñaḥ sarvavit" (*Muṇḍaka*: I. i. 9) cannot be properly explained in favour of the Pāñcarātrins. "If the term 'sarvajña' be etymologically taken as referring to Viṣṇu, what about the term 'sarvavit'?" he asks. This term too has to be explained as 'all-knower', which lands the Pāñcarātrin in the defect of redundance. Therefore, the Pāśupata method of explanation is in sooth, proper: the term 'sarvajña' refers to Śiva conventionally, while the term 'sarvavit' does so, through etymology.

† The popular reading of the *Viṣṇudharma*-verse, in which this statement occurs is :

[ औपनिषदवासुदेवप्रणीतत्वेऽपि पञ्चरात्रस्य जगद्व्यामोहकत्वप्रयोजनत्वप्रतिपादनम् ]

वासुदेवाभिधानेन केनचिद्विप्रलिप्सुना ।
प्रणीतं प्रस्तुतं तन्त्रमिति निश्चिनुमो वयम् ॥

अस्तु वा समस्तजगदध्यक्षो वासुदेव एवास्य तन्त्रस्य प्रणेता । तथाऽपि—

*मायामोहनविग्रहेण हरिणा देवद्रुहां संहर्तिं
हन्तुं मोहयता[1]ऽहितान्यभिहितान्याहुः हितच्छद्मना[2] ।
एवं किन्नु नयन्नयं निजमहामायागुहागह्वरम्
व्याजह्रे किमिदं नवेति विशये जाते कथं निर्णयः ?
प्रत्युत भ्रमयन्नेव व्याजहारेति गम्यते ।
वैदिकैरगृहीतत्वात् तथाऽऽर्हत[3]मतं यथा ॥

वैदिकापरिग्रहश्च प्रागेव[4] प्रपञ्चित इति । तस्मात् न स्वतन्त्रानुभव[5]मूलतया स्मरणम् ।

[ मन्वादिस्मरणसाम्येनापि पञ्चरात्रस्य प्रामाण्यानुपपत्तिवर्णनम् ]

नाऽपि मन्वादिस्मरणवदिति[6] अनुपपन्नं पञ्चरात्रस्मरणम् ।

---

1 $M_3$ – मोहयिता°
2 P splits as आहुर्हि तच्छद्मना
3 $M_3$—तताहर्त°; B, $M_4$—तथागत°
My—तदार्हत°
4 $M_5$ omits प्रागेव
5 My—स्वानुभव°
6 $M_1$, $M_7$, B, A—°स्मरणादिवदिति
$M_2$, My—°स्मृतिवदिति

---

śrutismṛtī mamaivājñā yastāmullaṅghya vartate
ājñācchedī mama drohī madbhaktopi na vaiṣṇavaḥ.

But the following reading is found in the printed edition, ch: 76. śl. 31:

śrutissmṛtir mamaivājñā tāmullaṅghya yajan śubhe
sarvasvenāpi māṁ devi nāpnotyājñāvilaṅghanāt.

* *Viṣṇupurāṇa*: (Jīvānanda's edn.) Aṁśa : III. chs. 17-18 give the story of Māyāmohana, preaching non-Vedic doctrines to demons, with a view to delude them. Other instances of Viṣṇu assuming different forms out of his Māyā, are to be found in the *Liṅgapurāṇa* and the *Kāśīkhaṇḍa*.



यदि मन्वादिवद्देवः[1] शुश्रुषापरितोषितात् ।
आचार्याल्लब्धवेदार्थः तन्त्रमेतदचीक्लृपत्[2] ॥

स्वातन्त्र्यकल्पनाऽमुष्य व्यर्था, मिथ्या तथाऽसती[3] ।
अनधीतोऽपि वेदोऽस्य प्रतिभातीत्यलौकिकम् ॥
* तत्र[4] वार्तिककारेण ये दोषास्समुदीरिताः ।
ते च सर्वे[5]ऽनुसन्धेयाः पुरुषातिशयादयः ॥

[ पञ्चरात्रस्य स्मृत्यन्तरेषु पाषण्डत्वेन परिगणितत्वकथनम् ]

किञ्च[6]—

§[7]'शैवं पाशुपतं[8] चैव बौद्धमप्यार्हतं तथा ।
कापालं पाञ्च[9]रात्रं च'त्येवं पाषण्डतास्मृतेः ॥
†'वैदिकं तान्त्रिकं चे'ति विभागकरणादपि ।
गम्यते पञ्चरात्रस्य वेदबाह्यत्वनिश्चयः ॥

---

1 $M_1$, $M_5$—°देव°; $M_3$—मन्वादिवदेव
2 $M_1$, $M_7$—°अचीकरत्; $M_3$—°एतदपिक्व्चित्
3 All ptd. texts and mss. read तथासति with the final ति as a short one, except My, which gives the reading chosen by us.
4 P, PM, T, $M_1$, $M_3$, $M_6$, $V_1$, B—अत्र
5 $M_1$, $M_2$, $M_4$, $M_7$, My, B add हि
6 $M_2$ & $M_7$ omit च
7 $M_2$ & My omit this and the following verse.
8 $M_4$, B—किं च पाशुपतम् (no किञ्च & शैवं separately)
9 P, T, $M_3$, $M_4$—पञ्च°

---

* *Vide Ślokavārtika* I. i. 2, śl. 111b, ff.

§ To be identified.

† *Vide Ānandasaṁhitā* ch. XIII, folios 43b-44a:
athāto devasyārcanaṁ dvividhaṁ śruṇu । [*sic*]
vaikhānasaṁ pāñcarātraṁ vaidikaṁ tāntrikaṁ kramāt ॥
tayor vaikhānasaṁ śreṣṭhamaihikāmuṣmikapradam ।

The (*Mahā*) *Sanatkumārasaṁhitā* draws a distinction among the Vaiṣṇava-mantras in terms of Vaidika, Tāntrika and Vaidika-tāntrika.

*Cf.* Ṛṣirātra IX. 35: vaidikaṁ tāntrikaṁ caiva tathā vaidikatāntrikam ।
mantratrayaṁ krameṇoktam........ ॥

*Cf. Vasiṣṭhasaṁhitā* XIII. 16b-17a:

§ 'शैवं पाशुपतं सौम्यं लागुडं च चतुर्विधम् ।
तन्त्रभेदस्समुद्दिष्टः सङ्करं न समाचरेत्' ॥ इति ।

तथा —

'भाक्तं[1] भागवतं चैव[2] सात्त्वतं च त्रिधा मतम्' ।
इत्येवं[3] तन्त्रभेदोक्तिः पञ्चरात्रेऽपि दृश्यते[4] ॥

[1] $M_4$, $M_7$, My, B—भक्तम्
[2] $M_4$ & B omit चैव
[3] $V_1$, B, A,— इत्येव
[4] $M_2$—पञ्चरात्रे प्रदृश्यते

Vaidikaṁ tāntrikaṁ caiva tathā vaidikatāntrikam ।
miśritaṁ vaidikaṁ mantraiḥ tasmāt vaidikatāntrikam ॥

Hārita in his *Dharmaśāstra*, says: srutiśca dvividhā, vaidikī tāntrikī ca ( Quoted in the *Liṅgadhāraṇacandrikā*, p. 240 ).

§ The *Vaikhānasāgamas* call the Vaikhānasa and the Pāñcarātra systems "saumya" and "āgneya" respectively. *Cf. Kāsyapajñānakāṇḍa*, p. 171: vaikhānasaṁ saumyam; āgneyaṁ pāñcarātram.

See also *Vimānārcanākalpa, paṭala* 77, p. 467 :

vaiṣṇavaṁ dvividhaṁ, vaikhānasaṁ pañcarātramiti; vaikhānasaṁ vaidikaṁ, vaidikairarcitam aihikāmuṣmikaphalapradam; pāñcarātramāgneyaṁ avaidikaṁ āmuṣmikaphalapradam; saumyaṁ sarvatra sampūjyam.

*Cf.* also *Bhāgavata* XI. 27. 7, 49 :

vaidikastāntriko miśra iti me trividho makhaḥ ।
trayāṇāmīpsitenaiva vidhinā māṁ samarcayet ॥
evaṁ kriyāyogapathaiḥ pumān vaidikatāntrikaiḥ ।
arcayannubhayataḥ siddhim matto vindatyabhīpsitam ॥

It may be noted that such a division is found even among the *Śaivāgamas*. Thus, the *Vāyu Saṁhitā* of the *Śivapurāṇa* ( uttarabhāga XXIV. 177-178 ) says:

śivāgamopi dvividhaḥ śrauto 'śrautaśca saṁsmṛtaḥ ।
śrutisāramayaḥ śrautaḥ svatantra itarassmṛtaḥ ॥ ( Quoted in *Liṅgadhāraṇacandrikā*, p. 290 ).

Also see *Śaivasiddhānta* p. 43:

"Āgamas are of two kinds: Śrauta and Aśrauta. The *Śrautāgamas* are dependent upon the Vedas and are full of their essence; not so the *Aśrauta*. The former Āgamas are accepted but not the latter. The *aśrauta-āgamas* have been declared by the Lord in order to delude some people. These Āgamas are Vāma, Pāśupata, Lākula, Bhairava, *etc.*"



[ जीवजन्मादिप्रतिपादकत्वात् श्रुतिन्यायादिविरोधाच्च पञ्चरात्रस्य अप्रामाण्यनिरूपणम् ]

किञ्च—

श्रुतिस्मृतिप्रतिक्षिप्तजीवजन्मादिगोचरम् ।
न्यायहीनं वचस्तथ्यमिति हास्यमिदं महत् ॥

तथा च श्रुतिः[1]—

*'अविनाशी वाऽरेऽयमात्मा अनुच्छित्तिधर्मा[2], मात्रासंसर्गस्तस्य भवति' इति ।

तथा—

†'जीवापेतं[3] वाव किलेदं म्रियते न जीवो म्रियत' इति ।

स्यादेतत्—उच्छेदाभावमात्रप्रतिपादकमेत[4]द्वचनं[5], न[6] जन्माभावमवगमयतीति ।

न—

अनुच्छेदाभिधानेन जन्मा[7]भावोऽवसीयते ।
‡[8]न ह्यस्ति सम्भवो, भावो[9] जातो नैव क्षरेदिति ॥

ननु च—

§'सदेव सोम्ये[10]दमि'ति सदेकत्वावधारणात्[11] ।
प्राक् सृष्टिकालात्, जीवानामभावोऽध्यवसीयते ॥

[1] $V_2$ is broken here
[2] $M_2$ adds आत्मा here
[3] $M_1$, $M_2$, $M_4$, $M_7$, B—जीवोपेतम्
[4] $M_1$, $M_2$, $M_4$, My—°इदम्°
[5] $M_4$, B, omit न and add तत्
[6] $M_1$, $M_7$—च
[7] My—कर्म°
[8] $M_3$ omits four lines from न ह्यस्ति upto अध्यवसीयते
[9] $M_1$, $M_7$—लोके; $M_2$ omits भावो
[10] P, PM, T—सौम्य°
[11] $M_2$—°अवधारणम्

* *Bṛhadāraṇyaka* IV. v. 14.
*Cf. Bhagavadgītā* II. 14 :
mātrāsparśāstu kaunteya śītoṣṇasukhaduḥkhadāḥ ।
āgamāpāyino 'nityāstān titikṣasva bhārata ॥
† *Chāndogya* VI. 11. 3.
‡ 'जातो भावो नैव क्षरेदि'त्येतद्वचनं न शक्यसम्भवमिति भावः ।
§ *Chāndogya*: VI. ii. 1: 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्म' ।

यदि जीवाः पृथग्भूताः, प्राक् सृष्टेः स्युः परात्मवत् ।
कथमेतत् §'सदेवे'ति तदेकत्वा[1]वधारणम् ?

[2]अत्रोच्यते—§'सदेवे'ति यदेकत्वावधारणम् ।
तत् सिसृक्षितवाय्वम्बुवियत्प्रभृतिगोचरम् ॥

पर्युदासिष्यतानेन वचसा चेतनो यदि ।
गगनादेरिवास्यापि जननं[3] निरदेक्ष्यत[4] ॥

न च निर्दिश्यते; तेन न जीवो जनिमृच्छति ।
†'तत्तेजोऽसृजते'त्यादौ जीवसर्गो न हि[5] श्रुतः[6] ॥

ननु च *'यतो वा इमानि[7]' इत्यत्र जीवानामेव जननजीवन-प्रायणा[8]भिसंवेशनानि प्रतीयन्ते ।

तथा हि *'भूत'शब्दोऽयं जीवनामभिधायकः ।
‡'भ्रामयन् सर्वभूतानी'त्येवमादिषु दर्शनात् ॥

*'जीवन्ती'ति हि शब्दोऽयं जीवेष्वेवावकल्पते[9] ।
तेन *'जायन्त' इत्येतत् ज्ञायते जीवगोचरम् ॥

तदिदमनुपपन्नं*'भूत'शब्दो विहायः-
पवनहुतभुगम्भोमेदिनीषु प्रसिद्धः ।

पदमिदमि[10]तरस्मिन् लक्षणावृत्ति; तेषां
बहुविधपरिणामो गीयते जीवनं च ॥

---

[1] $M_1$, $M_2$, $M_4$, $M_7$, My, B—सदेकत्व°
[2] A omits this line in full.
[3] $M_2$—नूनं न (no जननं)
[4] $M_1$—निनदेक्ष्यते; $M_2$—निरदैक्ष्यत B—निरदेक्ष्यते
[5] P, PM—हि नः; A, $M_3$, $M_5$, $M_6$, $V_1$, $V_2$, T—हि न
[6] $M_2$, $M_7$—स्मृतः
[7] P, PM & $M_3$ add भूतानि
[8] P, B, $M_2$, $M_4$, My—प्रयाण° $M_1$—प्रायाणाम्°
[9] $M_3$—°अवकल्प्यते
[10] $M_2$—तदिदम्° ; My—यदि पदम्°

---

† *Ibid*: VI. ii. 3. § *Chāndogya* VI. ii. 1.
* *Taittirīya* : III. i. 1: "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति" *etc.*
‡ *Bhagavadgītā*: XVIII, 61b.



प्रथममधिगता ये खादयो 'भूत'शब्दात्
तदनुगुणतयाऽर्थं वक्ति 'जीवन्ति'शब्दः ।

यदि च भवति जीवे 'भूत'शब्दः, तदानी-
मपि वदति तदीयं जन्म देहानुबन्धि ॥

अतो जीवपरत्वेऽपि 'भूत'शब्दस्य युज्यते ।
'जायन्त' इति शब्दोऽयं, 'गौर्जातो[1] गच्छती'तिवत् ॥

तथा*'ऽजो ह्येक' इत्याद्याः श्रुतयोऽन्याश्च सन्ति नः ।
जीवानुत्पत्तिवादिन्यः, तथा[2] भगवतो वचः ॥

†'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि', §'अजो नित्यः शाश्वतोऽयं पुराणः[3]', ‡'न जायते म्रियते वा कदाचित्' इत्यादि[4]। न्यायश्च—

विवादाध्यासितो जीवो न जातु जनिमृच्छति ।
द्रव्यत्वे सत्यमूर्तत्वात्, चिद्रूपत्वात् परात्मवत् ॥

पश्यन्तः पौरुषेयत्वे दूषणान्युक्तया दिशा ।
अनन्यगतयः केचित् तन्त्रं[5] नित्यमतिष्ठिपन् ॥

तदेतत् स्वहृदयनिहितविशदतरकर्त्रस्मरणप्रतिहतमभिधीयत[6] इत्युपेक्षणीयम् ।

किञ्च—

इत्थं[7] पाशुपतादीनां न्यायः किं दण्डवारितः ?
तथास्त्विवति यदि ब्रूयात्, व्याघातस्स्यात्परस्परम् ॥

---

[1] $M_1$, $M_2$, $M_7$, My, B—गोजातौ
[2] $M_1$ & $M_7$—तदा
[3] $M_3$ omits पुराणः
[4] $M_2$ reads इति
[5] My—तत्र
[6] A omits अभिधीयते
[7] B omits इत्थम्

---

* *Śvetāśvatara* IV. 5: "अजो ह्येको जुषमाणोऽनुशेते।"
† *Bhagavadgītā* XIII. 19a.
§ *Ibid*: II. 20c.
‡ *Ibid*: II. 20a.

सर्वलोकप्रसिद्धा च वासुदेवप्रणीतता ।
न हातुं शक्यते यद्वत् वेदस्यापौरुषेयता ॥

अथो कश्चित् ब्रूयादनुदय[1]विपर्यासविशयैः
*त्रिरूपे[2]ऽप्रामाण्ये[3] कतरदिह जोघुष्यत इति ।
स वक्तव्यः, किन्नु[4] त्वदभिलषितं †लागुडमते
तदेवेति ज्ञात्वा नियमितमद[5]श्शाम्यतु भवान् ॥

तदेवमुदीरितन्यायश्रुतिस्मृतीतिहासपुराणन्यायविरुद्धार्था[6]भिधानेन समस्तशिष्टजनपरिग्रहविरहेण च[7] स्वर्गापवर्गसाधनोपदेश[8]-व्याजेन केनापि जगद्वञ्चयितुं विरचितानि पञ्चरात्रतन्त्राणीति[9] मन्यामहे । ईदृशापस्मृति[10]विषयमेव तद्वचः[11]—

‡'या वेदबाह्यास्स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः' ॥ इति[12] ।

ईदृशदुर्मार्गानुगामिन एव तेऽपि, येषां[13] वाङ्मात्रेणापि अर्चनं निषिध्यते । उक्तं च—

एत एव च ते येषां[14] वाङ्मात्रेणापि नार्चनम् ।
¶'पाषण्डिनो विकर्मस्थान् बैडाल[15]व्रतिकान् शठान्[16] ॥

[1] $M_2$—अहृदय°
[2] $M_1$—त्रिरूपैः
[3] P, PM, T—प्रामाण्ये
[4] $M_1$, $M_4$—किन्तु
[5] $M_1$, $M_2$, $M_4$, $M_7$, My—°मतिः°
[6] P, PM, T, A, $M_3$, $M_5$, $M_6$, $V_1$, $V_2$—omit अर्थ
[7] $M_1$, $M_2$, $M_3$, $M_4$, $M_7$, My, B—omit च
[8] P, PM, $M_3$—°अवसानोपदेश°
[9] $M_2$, My—पञ्चरात्राणीति
[10] My—°उपस्मृति°
[11] PM—एतद्वचः
[12] PM omits इति
[13] P, PM - एषाम्
[14] $M_2$ - ये तेषाम्
My—एतेषाम्
[15] $M_3$, $M_6$—पैलाल°
$M_1$, $M_2$, $M_4$, $M_7$, B, $V_1$—बैलाल°
[16] $M_3$, —जडान्

* *Cf. Ślokavārtika* (I. i. 2) śl. 54a :
"अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ।"

† लागुडमतं पाशुपतमिति यावत् ।

‡ *Manusmṛti* XII. 95.

¶ *Ibid.* IV. 30.



हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ।' इति[1] ।
इत्यु[2]पन्यस्तया नीत्या[3] पञ्चरात्रमशेषतः ।
अप्रमाणमिति प्राप्तम्—

[ अथ पाञ्चरात्रप्रामाण्यसमर्थनम् ]

*एवं प्राप्तेऽभिधीयते ॥

[ तत्र हेतुप्रदर्शनम्; तन्निर्दुष्टत्वसमर्थनं च ]

विवादाध्यासितं तन्त्रं प्रमाणमिति गृह्यताम् ।
निर्दोषज्ञानजन्मत्वात्[4] †ज्योतिष्टोमादिवाक्यवत् ॥

न तावदनुमानेऽस्मिन् न्यायशास्त्रपरीक्षिताः ।
दोषा मृगयितुं शक्याः; तत्र[5] पक्षः परीक्ष्यताम् ॥

§पक्षो नाम प्रतिज्ञार्थः, स च सिद्धेन[6] केनचित् ।
स्वयंसिद्धो विशिष्टस्सन् यस्साधयितुमीप्सितः ॥

तत्र[7] न तावदप्रसिद्धविशेषणः[8] पक्षः । प्रामाण्यनाम्नः पदार्थस्योभयवादिसिद्धत्वात् प्रत्यक्षादौ[9] । नापि अप्रसिद्धविशेष्यः, पञ्चरात्रशास्त्रस्य[10] सर्व[11]लोकप्रसिद्धत्वात् । नापि सिद्धसाधनः, प्रस्तुतशास्त्रप्रामाण्यस्य प्रतिवादिनोऽसिद्धत्वात् । न च प्रत्यक्षविरुद्धः, अप्रामाण्यस्यातीन्द्रियत्वात् । नापि अनुमानविरुद्धः

[1] PM omits इति; $M_2$ adds एवं च
[2] $M_2$ omits इति
[3] $M_3$—रीत्या
[4] $M_2$, $M_3$—°जन्यत्वात्
[5] $M_1$, $M_4$, My, B—त्वत्र; $M_5$—तन्त्र
[6] $M_2$—सिद्धो न
[7] My omits तत्र
[8] $M_1$, $M_7$—°विशेषणकः
[9] $M_1$, $M_2$, $M_4$, $M_7$, My, B—omit प्रत्यक्षादौ
[10] $M_2$—पञ्चरात्रस्य
[11] $M_3$ omits सर्व

* From here starts the '*Siddhānta*'.

† 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्यवत् पञ्चरात्रतन्त्रमपि निर्दोषज्ञानकारणत्वाद्धेतोः प्रमाणमेवेति स्वीक्रियतामित्याशयः ।

§ पक्षशब्दं निर्वक्ति । पक्षो नाम (पर्वतादिः) प्रतिज्ञाविषयीभूतः कश्चन स्वयंसिद्धः पदार्थः । [प्रतिज्ञा 'पर्वतो वह्निमान्' इत्येवंरूपा । ] स च सिद्धेन केनचिदन्येन पदार्थेण हेतुभूतेन [धूमादिना] सिसाधयिषितः । सिसाधयिषितोऽपि सः किञ्चिद्विशिष्टाकारेण [वह्निमत्त्वरूपेण] सिसाधयिषितः, न तु सामान्याकारेण, इति दिक् ।

अनुपलम्भात्[1] ।

ननूपलभ्यत एवानुमानम्—'पञ्चरात्रशास्त्रं अप्रमाणम्, वेदबाह्यत्वात् बौद्धागमवत्' इति[2] ।

अत्र[3] ब्रूमः—कतरदिहाप्रामाण्यं सिसाधयिषितम्? यदि ज्ञानानुत्पत्तिलक्षणं, ततः प्रत्यक्षविरोधः । प्रत्यक्षं हि[4] विदितपदतदर्थ[5]सङ्गतेः[6] श्रोतुः पञ्चरात्रशास्त्र[7]वाक्यश्रवणसमनन्तरमुपजायमानं [8]तदर्थविषयं ज्ञानम्[9] । नापि संशयलक्षणम्, §तत एव विरोधात् । न खलु †'पद्ममध्ये चतुर्बाहुं पूजयेत् पुरुषोत्तमम्' इती[10]दं वचनं पूजयेन्नवेति संशयितं[11] प्रत्ययमुत्पादयति । नापि विपर्ययलक्षणम्, योग्यानुपलंभबाधात्[12]; ‡अनागतविपर्ययोत्प्रेक्षायाः प्रत्यक्षविरोधात्, अशेषव्यवहारोच्छेदहेतुत्वाच्च । प्रपञ्चयिष्यते चैतदुपरिष्टात् ।

$आगमविरुद्धं[13] च—

पञ्चरात्रागमे स्वार्थः तथैवेत्यवबोधनात् ।
अथ तस्याप्रमाणत्वे तद्विरोधो न दूषणम् ॥

---

1 P, PM—अनुपलम्भनात्

2 P, PM, T, A, $M_1$, $M_5$, $V_1$ & $V_2$ omit इति

3 $M_1$—तत्र

4 $M_1$, $M_2$, $M_4$, $M_6$, $M_7$, My, B, omit हि

5 $M_2$, $M_3$—°पदपदार्थ°

6 $M_3$, $M_4$, $M_6$, My, B—°सङ्गते°

7 A, $M_1$, $M_2$, $M_4$, $M_7$, My, B, omit शास्त्र

8 $V_2$ has a big lacuna here, from तदर्थ upto इत्याद्यागमशतस्य below

9 My—तदर्थविषयज्ञानम्

10 $M_3$ omits इति

11 $M_2$—संशयम्; $M_4$, B—संशयितुम्; My—°संशय°

12 P, PM—°अभावात्

13 My reads आगमविरुद्धत्वम्

---

§ 'तत एव' प्रत्यक्षादेवेत्यर्थः ।

† To be identified.

‡ विपर्ययो मिथ्याज्ञानम् । 'पञ्चरात्रं मिथ्या इत्येतज्ज्ञानं इदानीं नास्ति, कालान्तरे भविष्यति' इति, तदादाय अप्रामाण्यवचनं प्रत्यक्षेण विरुध्यते । तथा सति सकललोकव्यवहारबाधश्चेति भावः ।

$ 'पञ्चरात्रमप्रमाणं वेदबाह्यत्वात्' इति विरोधानुमानं पूर्वपक्षिणा प्रदर्शितम् । तत्रोच्यते सिद्धान्तिना 'आगमविरुद्धं च' इति । आगमपदेन पाञ्चरात्रागमः अभिप्रेतः । पाञ्चरात्रागमे प्रतिपाद्यमानोऽर्थः प्रमाणमिति तेनैवागमेन बोध्यते इत्यर्थः । तत्र आक्षिपति मीमांसकः 'अथे'ति । 'तस्य' पाञ्चरात्रागमस्यैव अप्रामाण्ये निश्चिते सति, मदुक्तेनानुमानवाक्येन विरोधः स्फुट एव । तत्र को दोषः ? इति तस्य प्रश्नः ।



§हन्तैवं सति तदप्रामाण्येऽनुमानप्रामाण्यम्, अनुमानप्रामाण्ये[1] तदप्रामाण्यमित्यन्योन्याश्रयणम् ।

†अपि च किमिदं वेदबाह्यत्वम्? यदि वेदान्यत्वं, ततः प्रत्यक्षादिभिरनैकान्तः[2] । अथ 'शब्दत्वे सति' इति हेतुः[3] विशेष्यते, ततो निग्रहस्थानम् । यथाऽऽहुः—¶'निर्विशेष[4]हेतुप्रयोगे पुनर्विशेषणोपादानं निग्रह' इति । अनैकान्तिकश्च[5] मन्वादिवाक्यैः ।

अथैतद्दोषहानाय 'वेदबाह्यत्व'शब्दतः ।
अवेदमूलतां मन्द[6]! मन्यसे किन्नु तार्किक$?

तेनायमर्थः—'शब्दत्वे[7] सति अवेदमूलत्वादि'ति, ततो वेदै[8]रनैकान्तः[9] । अथ[10] 'अवेदत्वे सति, शब्दत्वे सति अवेदमूलत्वादि'ति हेतुः, तथाऽपि[11]—

'सन्ति नद्यास्तटे[12] वृक्षा' इत्याद्याप्तोपदेशनैः ।
अवेदमूलैर्दुर्वारमनैकान्त्यं प्रसज्यते ॥

अथ 'अवेदत्वे[13] सति, शब्दत्वे सति[14], कार्यविषयत्वे[15]

---

1 $M_7$—अनुमानप्रामाण्येन

2 $M_2$, $M_6$, My—°अनेकान्तः

3 $M_2$, $M_6$, My omit हेतुः

4 A, $M_5$ & $V_1$—निर्विशेषण°

5 $M_1$, $M_2$, $M_4$, $M_7$, My, B—अनैकान्तश्च $M_5$—अनेकान्तिकश्च

6 T records a variant—मन्दम्

7 B—शाब्दत्वे

8 My—अतो वेदेन°

9 P, PM—अनैकान्त्यम् T, $M_3$, $M_6$—अनैकान्तम् $M_4$, $M_5$, B—अनेकान्तः

10 P, PM, T, A, $M_3$, $M_5$, $M_6$, $V_1$, read अथवा

11 $M_2$—अथाऽपि

12 $M_2$ alters the order as नद्यास्तटे सन्ति

13 My—अथावेदमूलत्वे

14 $M_3$ omits सति

15 $M_3$—कार्यत्वे; $M_1$ & $M_7$ add अपि and omit सति

---

§ यदा पञ्चरात्रमप्रमाणमिति निश्चितं तदैव त्वदुक्तानुमानं प्रमाणम्; तथा त्वदीयानुमाने प्रमाणतया सिद्धे पञ्चरात्राप्रामाण्यनिश्चयश्चेति अन्योन्याश्रयदोषप्रतिपादनं क्रियतेऽत्र सिद्धान्तिना ।

† परोक्तानुमानवाक्ये हेतुभूतस्य 'वेदबाह्यत्व'पदस्य तत्त्वं विचार्यते ।

¶ *Cf. Nyāyadarśana* V. ii. 6 : "अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ।"

$ The term 'Tārkika' need not necessarily refer to the logician here. Yāmuna makes fun of the dialectical helplessness of the Mīmāṁsaka.

सति अवेदमूलत्वादि'ति[1] हेतुः, अत्राऽपि—

*'अजीर्णे[2] मन्दमश्नीयादि'त्यादौ व्यभिचारिता।

अथ 'उक्तविशेषण[3]विशिष्टत्वे धर्माधर्मविषयत्वेऽपि[4] सति अवेद[5]मूलत्वात्' इति हेतुः, ततो[6] भागासिद्धो हेतुः। न हि पञ्चरात्रशास्त्रं कृत्स्नं[7] धर्माधर्मविषयम्, ब्रह्म[8]विषयाणामेव वचसां बाहुल्यात्।

अथ 'प्रमाणान्तरायोग्यार्थत्वे सति' इति[9] विशेषः, तत्राऽपि §सैवासिद्धिः। भगवत्प्रत्यक्षस्य धर्माधर्मादिसमस्तवस्तुगोचरस्य[10] श्रुतिशत[11]प्रसिद्धत्वात्। तच्चैतदनन्तरमेव[12] वक्ष्यामः। तदलमनेन अशिक्षिताक्षपादमताना[13]मप्रतिष्ठितप्रतिभाविजृंभितेन। सम्भाव्यमानान्यप्यनुमानान्तराणि परस्तादुपन्यस्य निरसिष्यन्ते[14]। अतो नानुमानविरुद्धः पक्षः।

नापि आगमविरुद्धः, पञ्च[15]रात्रशास्त्रप्रामाण्यप्रतिपादकस्य ‡'इदं महोपनिषदम्' इत्याद्यागम[16]शतस्य [17]प्रदर्शयिष्यमाणत्वात्।

स्ववचन, स्वाभ्युपगम, सर्वलोकप्रसिद्धि[18]विरोधाः शब्दविरोधप्रकारास्तु अनाशङ्कनीया एव। तथा हि—न तावत् स्ववचनविरोधः।

1 All except $M_3$ & $M_6$ read अवेदमूलत्वं
2 $M_6$—अजीर्णैः
3 $M_4$, $M_6$—°विशेषेण°
4 $M_3$—धर्माधर्मविशिष्टत्वे
5 $M_1$—वेद°
6 $M_3$ omits ततो to हेतुः
7 $M_3$ & $M_6$—कृत्स्न°
8 $M_2$ has a lacuna from ब्रह्म upto प्रामाणान्तरा
9 My omits इति
10 $M_4$ & B omit स्य
11 $M_4$ omits प्र
12 My, B— तच्चेदनन्तरमेव
13 'B' reads °मानानाम् for °मतानाम्
14 A, P, PM, T, $M_3$, $M_5$, $M_6$—निरस्यन्ते
15 $M_1$—पाञ्च°
16 $M_4$, B—इदं महोपनिषदाद्यागम°
17 $M_2$ omits प्र
18 $M_3$, $M_4$, B—°प्रसिद्ध°

* This line runs like a verse.

§ असिद्धिरेवेत्यर्थः।

‡ *Mahābhārata* ( Critical edn., Poona ) XII. 326. 100a :
"इदं महोपनिषदं चतुर्वेदसमन्वितम्।"



स हि त्रेधा—उक्तिमात्रविरोधो, धर्मोक्तिविरोधो, धर्म्युक्तिविरोधश्चेति। तत्र न तावदुक्तिमात्रविरुद्धोऽयं पक्षः। न हि 'पञ्च[1]रात्रशास्त्रं प्रमाणम्' इति प्रतिज्ञा[2]वचनं स्वार्थं व्याहन्ति, यथा *'यावज्जीवमहं[3] मौनी' इति। नापि धर्मोक्तिविरोधः। न हि प्रामाण्यं पञ्चरात्रोद्देशेन विधीयमानं पक्षं प्रतिक्षिपति, सर्ववाक्यानामिव मिथ्यात्ववचनम्। नापि धर्म्युक्तिविरोधः। सत्यपि धर्मिणि धर्मान्वयस्या[4]विरुद्धत्वात्। §न हि जननीत्वमिव वन्ध्यात्वेन पञ्चरात्रशास्त्रत्वं[5] प्रामाण्येन विरुद्धम्। न हि विवादाध्यासितस्य प्रामाण्यप्रतिज्ञाने[6] तत्र[7] श्रुत्युक्तधर्मिविशेष[8]विरोधः[9], विहितहिंसानामिवाधर्मत्वप्रतिज्ञाने। विवादाध्यासस्य उपलक्षणत्वात्। अतो[10] नागमविरोधः। तदेवमप्रतिपक्षः[11] पक्षः[12]।

†नापि हेतोरनैकान्तिकत्वादयो[13] दोषाः। तथा हि—न ताव-

1 My—पाञ्च°
2 $M_2$, My, omit प्रतिज्ञा
3 $M_2$, My omit अहम्
4 $M_3$—धर्माश्रयस्य°
My—अधर्मान्वयस्य
5 $M_2$—पञ्चरात्रशास्त्रे; $M_3$, $M_4$, $M_6$, $M_7$, My, B—पञ्चरात्रशास्त्रम्
6 My has a lacuna from तत्र upto नापि below
7 $M_1$, $M_2$, $M_4$, $M_7$, B add another तत्र
8 $M_1$, $M_4$, $M_7$, B, omit विशेष
9 $M_2$—श्रुत्युक्तधर्मविरोधः
10 $M_6$—ततो; P, PM, add वा
11 P—तदेवं प्रतिपन्नः; PM—तदेवं विप्रतिपन्नः; $M_1$, $M_4$, $M_5$, B, $V_2$—तदेवं प्रतिपक्षः
12 T, $M_2$, $M_3$ & $M_6$ read तदेवं प्रतिपक्षः, omitting पक्षः
13 $M_5$, B—अनेकान्तिकत्वादयो
My—अनैकान्तत्वादयो

* *Cf. Ślokavārtika* ( I. i. 5 ) śls. 61b-62b:
"त्रिधा शब्दविरोधस्स्यात् प्रसिध्यादिविभागतः।
प्रतिज्ञापूर्वसंजल्पसर्वलोकप्रसिद्धितः॥
यावज्जीवमहं मौनीत्युक्तिमात्रेण बाध्यते।"

§ *Cf. ibid*: śl. 63 :
"सर्ववाक्यमृषात्वे तु धर्मोक्त्यैवात्मबाधनम्।
धर्म्युक्त्याहं यतो जातः, सा वन्ध्या जननी मम॥"

† *Vide Tarkasaṅgraha* ( Vavilla edn. ) *Anumāna*-section, p. 52:
"सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः।"

दनैकान्तिकः[1] । ‡स हि द्वेधा—साधारणासाधारणभेदात् । यथा पृथ्वीनित्यत्वसाधने प्रमेयत्वं साधारणः[2]; असाधारणस्तत्रैव गन्धवत्त्वम्[3] । तत्र न[4] तावत् निर्दोषज्ञानकारणत्वं प्रमाणाप्रमाणसाधारणं, येन साधारणानैकान्तिकं[5] स्यात्[6] । न हि निर्दोषज्ञानकारणत्वं अप्रमाणभूतविप्रलम्भकवचनादिषु विपक्षेषु दृष्टचरम् । नापि असाधारणः । ज्योतिष्टोमादिवाक्यदृष्टान्ताभिधानेनैव सपक्षान्वयस्य [7]प्रदर्शितत्वात् । नापि विरुद्धः, *विपरीतव्याप्त्यभावात्[8] । न हि निर्दोषज्ञान[9]कारणत्वं अप्रामाण्येन व्याप्तम् । न च †कालात्ययापदिष्टः, प्रत्यक्षविरोधाभावात्; आगमानुगुण्याच्च । न चासिद्धत्वम्[10], §असिद्धिर्हि आश्रयतः, स्वरूपतो वा । न तावदाश्रयासिद्धिः[11], पञ्चरात्रशास्त्रस्य आश्रयत्वात् । नापि स्वरूपासिद्धिः[12] । सा हि[13]

[1] $M_5$, B—अनेकान्तिकः

[2] $M_4$—साधारणम्

[3] $M_2$, $M_4$ - गन्धत्वम्

[4] B, omits न

[5] $M_6$—साधारणानैकान्तिकः

[6] $M_2$—साधारणानैकान्तिकत्वात्
My—साधारणानैकान्तिकत्वम्

[7] My omits प्र

[8] $M_4$—विपरीतस्याप्यभावात्

[9] $M_5$ omits ज्ञान

[10] $M_2$, My—°असिद्धम्

[11] T, $M_3$, $M_4$, $M_5$, $M_6$, My, $V_1$, B—आश्रयासिद्धः

[12] P, T, PM, $M_2$ to $M_6$, My, $V_1$, $V_2$, B—स्वरूपासिद्धः

[13] P, PM, T, $M_2$ to $M_6$, My, $V_1$, $V_2$, B—सोऽपि

‡ A third variety of '*anaikāntika*' is '*anupasaṁhārin*' which the author does not enumerate here. *Cf. Tarksaṅgraha*: p. 53: 'सव्यभिचारोऽनैकान्तिकः । स त्रिविधः—साधारणासाधारणानुपसंहारिभेदात्' । Quoting the passage 'न तावदनैकान्तिकः' & c. in his *Nyāyapariśuddhi* [ Deśika Granthamālā ], p. 130, Deśika says: "बाधितस्य तु न पक्षधर्मत्वं, नाऽपि व्याप्तिरिति दूषणद्वयसमुच्चयः ।"

* विपरीतेन साध्याभावेन व्याप्तिः विपरीतव्याप्तिरिति तृतीयातत्पुरुषः । सा च व्याप्तिः पञ्चरात्रप्रामाण्यप्रतिपादके वाक्ये 'निर्दोषज्ञानजन्मत्व'रूपस्य हेतोर्नास्तीत्यर्थः । 'शब्दो नित्यः कृतकत्वात्' इत्यत्र कृतकत्वरूपो हेतुः साध्याभावेन नित्यत्वाभावेन अनित्यत्वेन हि व्याप्तः, यत्र कृतकत्वं तत्रानित्यत्वमिति नियमात् । तस्मात्स हेतुर्विरुद्धः । एवमत्रापीति बोध्यम् ।

† कालात्ययापदिष्टस्यैव 'बाध' इत्यपि व्यवहारः ।

§ हेतोरसिद्धताऽपि नास्तीत्यर्थः । व्याप्यत्वासिद्धिरित्यन्योऽपि असिद्धिप्रकारः शास्त्रग्रन्थेषु परिगण्यते । स तु नोदाहृतो ग्रन्थकृता ।

अत्र हेत्वाभासेषु पञ्चसु 'अनैकान्तिकविरुद्धकालात्ययापदिष्टासिद्धा' इति चत्वार एव प्रकाराः परिगणिताः । अन्यः प्रभेदः सत्प्रतिपक्षाख्यः न प्रतिपादितोऽत्र । 'साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्ष' इति हि तल्लक्षणम् । तादृशं च हेत्वन्तरं नैव सम्भावनाभूमिरिति महता प्रबन्धेन ग्रन्थकारेण समनन्तरमेव निरूपितमिति, न पृथगुक्तिरिति च ध्येयम् ।



त्रेधा—अज्ञानसन्देहविपर्ययभेदात् । न तावदज्ञानासिद्धिः[1] । तत्प्रतिपादकशब्दोच्चारणात् । नाऽपि सन्दिग्धासिद्धिः[2] । निर्दोषत्वस्य[3] वादिनः स्वयंसिद्धत्वात् । प्रतिवादिनोऽपि दोषानुपलम्भादेव अनायाससिद्धत्वात् । विपर्ययासिद्धिस्तु[4] दूरोत्सारितैव ।

[ शब्दानां स्वतःप्रामाण्यपरतोऽप्रामाण्यप्रतिपादनम् ]

ननु कथं पौरुषेयत्वसामान्यादापतन्ती दोषसंभावना अपनीयते पञ्चरात्रतन्त्राणाम्[5] ?

कथं[6] वाक्यत्वसामान्यादापतन्ती वेदेषु सा वार्यते[7] ? अपौरुषेयत्वादिति चेत्, तदिहापि[8] सर्वज्ञावाप्तकाम[9]परमपुरुषप्रणीततयेत्यवगम्य शाम्यतु भवान् । एतदुक्तं भवति—

नैव शब्दे स्वतो दोषाः प्रामाण्यपरिपन्थिनः[10] ।
सन्ति, किन्तु स्वतस्तस्य प्रमाणत्वमिति स्थितिः ॥
वक्तुराशयदोषेण केषुचित्तदपोद्यते ।
*'अङ्गुल्यग्रेऽस्ति मातङ्गयूथ[11]मि'त्येवमादिषु ॥
प्रस्तुतग्रन्थसन्दर्भे वक्तुराशयगामिनीम् ।
दोषशङ्कां त्रयीमूर्धध्वनिरेवापमार्ष्टि नः ॥

[1] $M_2$, $M_3$, $M_4$, $M_6$, My, B—°अज्ञानासिद्धः

[2] P, PM, T, $M_2$ to $M_6$, My, $V_1$, B—सन्दिग्धासिद्धः

[3] $M_4$, B—निर्दोषस्य

[4] $M_3$, $M_6$—विपर्ययासिद्धस्तु

[5] P—°मन्त्राणाम्

[6] My adds वा

[7] $M_2$, My—निवार्यते
Here onwards $V_2$ breaks off

[8] $M_4$ omits अपि

[9] $M_1$ omits काम

[10] A, $M_1$, $M_3$, $M_5$—°परिबन्धिनः

[11] My—°यूथः

* *Cf. Prakaraṇapañcikā*: II. 4, p. 13 :
'विनाप्यर्थं हि शब्देन प्रतीतिरुपजायते ।
अङ्गुल्यग्रेऽस्ति करिणां यूथमित्येवमादिना ॥'

§ वदन्ति खलु वेदान्ताः सर्वज्ञं जगतः पतिम्[1] ।
महाकारुणिकं[2], तस्मिन् विप्रलम्भादयः कथम् ?

[ शब्दानां सिद्धे वस्तुनि प्रामाण्यसमर्थनम् ]

*ननु च—

सिद्धे वस्तुनि शब्दानां प्रामाण्यं नेत्यवादिषम् ।
तत्परेषु प्रयोगेषु व्युत्पत्त्यग्रहणादिति ॥

† तदसत्—सिद्धमप्यर्थमाचक्षाणाः प्रयोगतः ।
लौकिकाः प्रतिपद्यन्ते शक्तिं कार्यपरादिव ॥

तद्यथा[3] 'पुत्रस्ते जात' इति वचनश्रवणानन्तरजनित-विशिष्टवदनविकासावसान[4]समनन्तरं 'हृष्टोऽयम्' इति प्रतिपद्य, 'हर्षोऽयं प्रियार्थावगमनिबन्धन' इति स्वात्मनि आकलयन्[5], मध्यम-वृद्धस्यापि तन्निबन्धनमेव हर्षमनुमिमानः, तद्भावभावितया[6] शब्दस्यैव प्रियार्थावबोधकतामध्यवस्यति । तत्रापि अतीतानागतादि-भेदभिन्नेषु हर्ष[7]हेतुषु उपप्लवमानेषु[8] 'कस्य वक्ताऽयम् ?' इति[9] विचिकित्सोदये सति--

[1] $M_1$—सार्वज्ञ्यं जगतः पतेः
[2] $M_1$—महाकारुणिके
$M_2$—महाकारुणिकः
$M_3$—महाकारणकम्
[3] $M_3$ omits तद्यथा
[4] $M_1$, $M_2$, $M_3$, $M_4$, $M_6$, $M_7$, My, B—°विकासावसाय°
[5] $M_6$—स्वात्मन्याकलय्य
[6] PM—तद्भावितया
[7] A omits हर्ष
[8] A—°उपपद्यमानेषु
[9] $M_1$ adds अपि

§ Deśika, in his *Stotraratnabhāṣya* (Deśika Granthamālā), p. 37, says that the mercy of the Lord is referred to in the following Upaniṣads:
*Śvetāśvatara* : III. 17 : 'सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत्';
*Kaṭhavallī* : IV. 12a : 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' and
*Mahopaniṣat* : I : 'स एकाकी न रमेत'
Also *cf. Paramasaṁhitā* : III. 40b-41a; p. 24:

'ध्यातव्यो भगवानेव नान्यो विश्वस्य कारणात् ।
स्वामित्वेन गुरुत्वेन सुहृत्त्वेन च सर्वदा ॥'

* This is the view of the Prābhākara.
† This is the reply given by the Siddhāntin.



तदनन्तरसञ्जातजातकर्मावबोधतः[1] ।
तद्धेतुभूतः कोऽपीति निश्चिन्वन्नात्मना[2] पुरा[3] ॥
कर्तव्यं जातकर्मेति प्रतीतेः किन्तु कारणम् ?
प्रतीतं प्रियमित्येवं[4] विमृशन्न[5]वगच्छति ॥
पुत्रजन्मैव[6] नैवा[7]न्यदिति व्युत्पित्सुरर्भकः ॥

तत्र च[8]—

आवापोद्वाप[9]भेदेन पदानां शक्तिनिश्चयः ।
उपपद्यत इत्येवं सिद्धा सिद्धार्थवाचिता ॥

ननु—न[10] तद्भावभावितामात्रेण कार्यकारणभावः, अति-प्रसङ्गात् । न च जातकर्मकर्तव्यतावगतिः[11] नियमेन प्रियार्थावगम[12]-पुरस्सरी । दृश्यते हि कुटुम्बभरणायास[13]विदूयमानमनसोऽप्रीति-पूर्विकाऽपि[14] तत्कर्तव्यतावगतिः ।

कार्यावगतिः किं शब्दकारणिका दृष्टा, येन 'गामानये'त्यादौ गवानयनादि[15]कर्तव्यतावगतिः शब्दकारणिका अभ्युपेयते ? अथ *आकस्मिकत्वानुपपत्तेः सन्निहितशब्द[16] एव तदवगमहेतुरिति चेत्, समानोऽयं †विधिरितरत्रापि ।

[1] B, My—°बोधकः
[2] P, PM, T, $M_1$, $M_2$, $M_3$, $M_5$, $M_6$, $M_7$, My, $V_1$, A—°आत्मनः
[3] $M_1$—पुनः
[4] $M_5$—प्रियमित्येव
[5] $M_2$, My—विमर्शन्
[6] $M_4$—पुत्रजन्मेव
[7] PM—मैव°
[8] $M_3$, $M_6$ omit तत्र च
[9] PM—अवापोद्धार; P, T, $M_1$, $M_3$ to $M_7$, B, A, $V_1$—आवापोद्धार°
[10] $M_4$, $M_7$, My, B—omit न
[11] $M_1$, $M_4$—°गतिम्; $M_7$—°कर्तव्यावगतिः; PM—°गति
[12] $M_2$, My—°पदार्थावगम°
[13] A—कुटुम्बायास°; $M_3$—कुटुम्बभरणाय°
[14] $M_4$—°अप्रीतिपूर्वकापि; $M_6$—अप्रीतपूर्वकापि
[15] $M_3$ omits आदि
[16] $M_2$—°सहितश्शब्दः; My—°सहितशब्दः

* कारणं विना कार्यं न जायत इति हेतोः ।
† 'विधिः' न्याय इत्यर्थः ।

याऽपि[1] प्रवृत्तिहेत्वर्थप्रतिपादकता* क्वचित् ।
लिङादि[2]प्रत्ययावाप†हैतुकी[3] साऽवसीयते ॥

[ कार्यमात्रपरत्वस्य आग्रहैकमूलत्वकथनम् ]

यश्च[4] कार्यपरतामेवाखिलपदानामातिष्ठते[5], तेनापि आवापोद्धारवि[6]निर्धारिता‡संसृष्टशरीराणामेव गवाश्वादीनां§ तत्तत्पदार्थता[7]$ समर्थनीया । समर्थ्यमानापि कार्यान्वयिन्येव समर्थ्यत इति चेदलं व्यसनेन¶ । अन्यान्विता[8]भिधानेनापि व्यवहारोपपत्तेः ।

×अवश्याश्रयणीयेयमन्वितार्थाभिधायिता ।

1 $M_1$ & $M_3$ omit याऽपि
2 $M_1$ has a lacuna from प्रत्यय to साव
3 $M_4$, $M_7$, My & B—°हेतुकी°
4 $M_4$—यच्च
5 A, $M_5$, $M_6$—°अवतिष्ठते; $M_2$, My—°अधितिष्ठते
6 $M_1$, $M_2$ omit वि
7 P, PM, T, $M_2$, $M_4$, $M_5$, $M_6$, $V_1$, A—तत्पदार्थता
8 $M_3$—अन्यान्वय°

* प्रवृत्तिहेतुः कार्यम्; तद्रूपोऽर्थः; तत्प्रतिपादकता लिङादीनामित्यन्वयः ।

† आवापः प्रयोग इति यावत् ।

‡ आवापोद्धारैः विनिर्धारितं कार्यम् । तदसंसृष्टशरीराणामित्यन्वयः ।

§ शुद्धगवाश्वादिपदानाम् ।

$ तत्तत्पदार्थता, कार्यानन्वितोऽप्यर्थः ।

¶ भाट्टमते पदेनार्थः, तेन जातिमात्रस्य बोध इत्यभ्युपगमः । अन्विताभिधानं नोररीक्रियते । तार्किकाणामप्येवमेवाभ्युपगमः ।

× Yāmuna emphasises here that no speciality should be attached to a statement that speaks of something to be done (*kārya*). Words, he says, generally depend upon some factors and those factors need not necessarily be '*kārya*'. Pointing out the untenability of the theory of '*kārya*', he says that it goes astray in the instance of '*liṅ*' - the optative itself. Even the '*liṅ*'—suffix is found to depend upon a host of factors like the qualified aspirant (*adhikārin*), the means (*sādhana*) and the thing to be attained (*sādhya*). *Cf.* the following verse :

tasmādākāṅkṣitāsannayogyārthāntarasaṅgate ।
svārthe padānāṁ vyutpattirāstheyā sarvavādibhiḥ ॥

Words convey their sense only in connection with such other idea or factor that is required to complete its sense (*ākāṅkṣita*), that is compatible with it (*yogya*) and which is supplied by a word uttered along with it (*āsanna*). *Kārya* should therefore occupy a subordinate but not the supreme position in the scheme of significance of words.



कार्यान्विता[1]भिधायित्वमन्यथा +दुर्वदं[2] यतः ॥

अव्याप्तं[3] चैतत् 'कार्यान्वितमेव सर्वत्र पदाभिधेयमि'ति[4]; †लिङादिषु व्यभिचारात् । लिङादयो हि[5] परिनिष्ठिता[6]धिकाराद्य[7]नुबन्ध[8]सम्बन्धिनमेव‡ स्वार्थ§मभिदधति । अथ तेषु$अन्विताभिधानं, इतरत्र कार्यान्विताभिधानमिति[9] चेत्[10], तदर्ध[11]जरतीयम्* । ततो वरं सर्वत्रान्विताभिधानमेवाश्रीयताम् ।

×तस्मादाकांक्षितासन्नयोग्यार्थान्तरसङ्गते[12] ।
स्वार्थे, पदानां व्युत्पत्तिरास्थेया सर्ववादिभिः ॥

÷यद्यपि प्रवृत्त्यनुपपत्तिसमधिगमनीयैव शब्दशक्तिः;

1 $M_1$—कार्यान्वय°
2 P, T—दुर्वचम्; $M_1$—दुर्विधम्
3 $M_3$—अव्याप्तिः; $M_6$—अव्याप्त:
4 $M_3$, $M_5$, T—पदाभिधेयत्वमिति
5 $M_1$, $M_4$, $M_7$—°अपि
6 $M_3$ adds आदि
7 $M_1$, $M_2$, $M_4$, $M_7$, B—°अधिकार्यादि°
8 $M_1$, $M_2$, $M_4$, $M_7$, My—°अनुबन्धि°
9 $M_1$ $M_7$—कार्यान्वितत्वमिति
$M_4$, B—कार्यान्वितमिति
10 $M_2$, My read कार्यान्वितत्वम्, omitting इति चेत्
11 $M_1$ & $M_2$ omit तत्
12 P, T—° सङ्गतेः

+ दुर्वदं सर्वत्रेति बोध्यम् ।

† लिङा साक्षात् कार्यमुच्यत इति चेत्, लिङि कार्यपरत्वं नास्तीति व्यभिचारः । लिङ् कार्यमेव साक्षात्, न तु कार्यपरमिति ध्येयम् ।

‡ अधिकारः फलस्वाम्यम्—स्वर्गकामादिपदोक्तम् ।

§ स्वार्थं कार्यम् ।

$ तेषु लिङादिषु ।

* For an explanation of the *ardhajaratī-nyāya* see *Nyāyasūdhā* under I. iii. 3, p. 135: "केनचित् पाशुपतेन सर्वजरत्या योषितोऽनुपभोग्यत्वात्, सर्वतरुण्याश्च वृद्धेऽप्यरुचिप्रसङ्गात् अर्धजरत्यानयने दूतः प्रेषित इति लोकप्रवादोऽर्धजरतीशब्दे ।"

Also *cf. Bhuvaneśalaukikanyāyasāhasrī*, p. 104 : "यत्र सर्वत्यागे ग्रहणे वा प्रसक्ते, निर्युक्तिकमेकांशोपादानमंशान्तरत्यागश्च क्रियते, तत्रायं न्यायोऽवतरति—यथा जरती वृद्धा स्त्री, तस्याः पतिः तदर्धं मुखमात्रं गृह्णाति ह्यवयवान्तरं त्यजतीति युक्तिशून्यम् ।"

× योग्यार्थान्तरसङ्गते स्वार्थे एव पदव्युत्पत्तिः । एतेन पदानां यत्किञ्चिदर्थान्वयः निरस्तो वेदितव्यः । अर्थानां विशिष्टबोधकत्वं स्वाभाव्यमिति भाट्टाः । शब्दस्यैव सम्बन्धबोधकत्वं, नार्थस्येति प्राभाकराः । तत्राऽऽह 'तस्मादि'त्यादिना ।

÷ 'तुष्यतु दुर्जन'न्यायेनाऽऽह 'यद्यपी'ति । प्रवृत्तिर्गवानयनादिषु । तस्या अन्यथानुपपत्त्या प्रथमं शब्दशक्तिरभ्युपेया ।

तथाऽपि[1]—

[ शक्तिनिश्चयसमये कार्यस्य तटस्थोपायमात्रत्वप्रतिपादनम् ]

¶तटस्थोपायतामात्रं शब्दशक्तिवि[2]निश्चये ।
कार्यस्याश्रयितुं युक्तं, प्रयोक्त्राकाशदेशवत्[3] ॥
*'अनन्यलभ्यः[4] शब्दार्थ' इति न्यायविदस्स्थिताः[5] ।
तस्मान्नोपायभूतस्य[6] कार्यस्यास्ति समन्वयः ॥

[ उक्तार्थे दृष्टान्तप्रदर्शनम् ]

व्युत्पन्नव्यवहारेषु[7], †'पयःप्रतरणा'दिवत् ॥

‡यथैव हि[8] ब्रह्म[9]जातीयादेवज्रविशेषावधारणोपयोगि-

---

1 $M_1$, $M_2$, $M_7$, My, B, omit तथापि
2 B omits वि, rendering the metre defective
3 $M_7$—°देववत्
4 $M_4$—अनन्यलब्धः
5 $M_1$, $M_2$, $M_4$, $M_7$, My, B—इति न्यायव्यवस्थितिः
6 $M_1$—°भूताय
7 $M_2$—°व्यवहारे तु; $M_3$—°व्यवहारेऽपि
8 $M_2$, $M_4$, $M_7$, My, B—omit हि
$M_3$ reads यत्तथैव हि
9 $M_2$ adds विशेष

---

¶ प्रेरकपुरुषस्य, आकाशस्य, देशस्य वा क्वचिदपि विषयकोटिप्रविष्टत्वं नाऽभ्युपेयते, तटस्थत्वमेव । एवं कार्यस्यापीति ध्येयम् ।

* 'शब्दार्थः' शब्दशक्तिगोचर इत्यर्थः । स एव शब्दस्यार्थः, यः प्रकारान्तरेण न लभ्यते । "गङ्गायां घोष" इत्यत्र गङ्गापदस्य प्रवाहरूपार्थमात्रे शक्तिस्वीकारे, तत्संबन्धात् तीरमपि लभ्यते । एवं लक्षणया प्रकारान्तरेणापि तीरलाभान्न तत्र शक्तिस्वीकारः । अत एव जातिमात्रे शक्तिः; व्यक्तेराक्षेपादेव सिद्धेः । *Cf. Bhuvaneśalaukikanyāyāsāhasrī*, p. 243.

† *Vide Ratnaśāstra* of Buddhabhaṭa, śl. 39:

"यत्तु सर्वगुणैर्युक्तं वज्रं तरति वारिणि ।
रत्नवर्गे समस्तेऽपि तस्य धारणमिष्यते ॥"

The quality of gems is tested by putting them in water. If they float, that is an indication of their superiority. This method of testing or the knowledge regarding the test is no doubt useful in determining the class of gems; but it is of no avail at the time of wearing them. On this analogy, it is argued that the knowledge of '*kārya*' though useful to arrive at the significance of words, is not useful at the time of using those words.

‡ For a classification of gems as 'male' and 'female', see *Ratnadīpikā* of Caṇḍeśvara, śls. 11-13, and for a classification into the four castes 'brāhmaṇa', 'kṣatriya', 'vaiśya' and 'śūdra' see *Ratnaśāstra*: śls. 21 and 23.



नोऽपि[1] पयःप्रतरणादेः, अवधृतरत्नसतत्त्वस्य[2] न §व्यवहारदशायामुपयोगः, एवं व्युत्पत्तिग्रहणसमयसमुपयुक्तस्यापि कार्यस्य न व्युत्पन्न[3]दशायामुपयोगः । यदि च कार्यान्वितमेवार्थं[4] शब्दाः प्रतिपादयन्ति, कथं तेभ्यः परिनिष्ठितनदीतीरफलादिसंसर्गावगमः? नाऽयं मुख्यो लाक्षणिक[5] इति चेत्, क्व वा शब्दानां मुख्यप्रयोगः? *'मानान्तरापूर्वं[6] कार्यं इति चेत्, न[7] । तत्र अव्युत्पन्नत्वेन† प्रयोगानुपपत्तेः ।

न हि मानान्तरापूर्वे व्युत्पत्तिरुपपद्यते ।
न चाव्युत्पन्न[8]शब्देभ्यः प्रत्ययोऽतिप्रसङ्गतः ॥

‡योऽपि मन्यते लोके क्रियाकार्ये[9] व्युत्पन्नः शब्दः[10] ×फलपदसमभिव्याहार[11]बलप्रतिलब्धतत्साधनभावभङ्गुरयागादिधात्वर्थोक्ती-

---

1 $M_2$, My omit अपि
2 $M_1$, $M_2$—°रत्नत्वस्य
$M_3$—°रत्नस्तत्त्वस्य
$M_4$, $M_7$, My, B—°रत्नतत्त्वस्य
P, PM, T, $M_5$, A, $V_1$—°रत्नस्वत्वस्य
We chose the reading of $M_6$.
3 $M_3$—°व्युत्पत्ति°
4 $M_1$, $M_2$, $M_4$, $M_7$, My, B—°स्वार्थम्
5 $M_1$—लक्षण°
6 $M_3$—नामान्तरापूर्वे
7 $M_3$ omits न
8 $M_4$ & B—न चाप्युत्पन्न°
9 $M_2$—lacuna from व्युत्पन्नः upto न, preceding शब्दार्थ below.
10 P, PM, $M_3$, $M_4$, $M_6$, My—व्युत्पन्नशब्दः; B—व्युत्पन्नशब्द°
11 PM—°समभिहार°; $M_6$—°समभिव्यापार°

---

§ 'व्यवहारदशा'पदेन, धारणसमयो विवक्षितः ।

* *Cf. Prakaraṇapañcikā* II. p. 187:

"क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत् ।
अतो मानान्तरापूर्वमपूर्वमिति गीयते ॥"

† शब्दस्येति शेषः ।

‡ Yāmuna here attacks the theory advanced by the Prābhākaras that the words uttered by human beings gain validity only on inferential evidence because those beings are liable to defects.

× 'फलपदं' फलवाचकं स्वर्गकामादिपदम् । तत्साधनभावः स्वर्गसाधनत्वं अपूर्वस्येत्यर्थः । धात्वर्थोत्तीर्णं, धात्वर्थातिरिक्तम् ।

णापूर्वकार्याभिधानशक्तिः $वेदे[1] मोदते¶, लोके+ तु संमुग्धेनाऽपि[2] व्यवहारोपपत्तेः, न शब्दार्थ[3]तत्त्वावधारणमाद्रियत[4] इति— तस्यापीदं मनोरथमात्रम् । न हि क्रियाकार्ये व्युत्पन्नः* स्थायिकार्यं[5] प्रतिपादयति, अतिप्रसंगात्† ।

यदि वृद्धव्यवहारे समधि[6]गतपदसामर्थ्येऽनुरुध्यमाने§ऽन्वयावगतिः[7] नोपपद्यते, मोपपादि । न तु[8] तदनुपपत्त्या क्लृप्तशक्तिपरित्यागेन शब्दः शक्त्यन्तरं[9] भजते । कामं लक्षणाऽऽश्रीयताम् । न हि ‡विरुद्धार्थपद[10]समभिव्याहारे[11] पदानामभिधानमे[12]वान्यथा नीयते । सर्वशब्दार्थेषु अनाश्वासप्रसङ्गात् ।

किञ्च[13] मानान्तरापूर्व×कार्यबोधनशक्तता ।
÷न कर्मफलसम्बन्ध[14]सिध्यै तावदुपेयते ॥

---

[1] B—वेदो
[2] T—समुग्धेनापि
[3] $M_1$—शक्यार्थ°
[4] $M_1$, $M_2$, $M_4$, My, B—°आश्रीयते
[5] All printed texts and mss. read व्युत्पन्नस्थायिकार्यम्
[6] B—°समाधि°
[7] $M_1$, $M_2$, $M_4$, $M_7$, My, B—उपायावगतिः $M_3$—क वावगतिः
[8] My—ननु
[9] P, PM—शब्दशक्त्यन्तरम्
[10] $M_1$ omits पद
[11] PM—°समभिहारे $M_6$, B—°समभिव्यवहारे
[12] $M_2$ omits अभिधानम्
[13] $M_3$ omits किञ्च
[14] $M_1$ & $M_7$—°सम्बन्धि°

---

$ ‘फलपद...शक्तिः’ इत्ययं बहुव्रीहिः ‘शब्द’ इत्यस्य विशेषणम् ।
¶ वेदे निर्वृत्त इति भावः ।
+ ‘क्रियाकार्ये शक्तिर्लोकेऽप्यस्ती’ति भ्रान्तः पुरुष इति भावः ।
*Cf. Prakaraṇapañcikā* V. p. 95:
“कथं तर्हि लौकिकवाक्येभ्यो व्यवहारप्रवृत्तिः ? उच्यते—अर्थसंशयेनापि लोको व्यवहरति । सन्दिग्धायामपि वृष्टौ वृष्ट्यायत्तफले कर्मणि प्रवर्तन्ते ।”
* शब्द इति शेषः ।
† घटज्ञानात् पटज्ञानमपि भवेदित्यापत्तिः ।
§ अन्वयावगतिः ‘स्वर्गकाम’पदस्येति शेषः ।
‡ ‘सिंहो माणवकः’, ‘अग्निर्माणवकः’ इत्यादिप्रयोगेषु ।
× मानान्तरापूर्वं = प्रमाणान्तरेणाज्ञातं अपूर्वम् ; तद्रूपं कार्यमित्यन्वयः ।
÷ कर्मणो यागादेः, फलेन स्वर्गादिना सम्बन्धः । तत्सिध्यर्थं मानान्तराज्ञातस्य कार्यस्य बोधकता पदानां नाभ्युपेया । अपूर्वस्य लिङर्थत्वं वर्तत इति प्राभाकरः; नास्तीति भाट्टो ग्रन्थकारश्चेति बोध्यम् ।



[1]नैयोगिकस्स[2] सम्बन्धः, न पुनः [3]वैनियोगिकः ।
*धात्वर्थोत्तीर्णकार्यात्मा न कर्मफलसङ्गमात् ॥
ऋते[4] सिध्यति सम्बन्धः, स च §तस्मादृते न हि ।

ततश्च दुरुत्तरमितरेतराश्रयणम् ।†

साध्यस्वर्गविशिष्टस्य पुरुषस्य प्रवर्तकः ।
न स्याद्यदि[5] तदिष्टार्थ[6]साधनं न भवेद्विधिः ॥
भङ्गुरो न च धात्वर्थः करणत्वेन[7] कल्पते[8] ।
इति तद्भिन्नकार्यार्थबोधकत्वं यदुच्यते ॥
तदसत्—न हि[9] साध्येन स्वर्गेणायं विशेष्यते[10] ।
स्वर्गं कामयमानो हि पुरुषोऽत्र‡ नियुज्यते ॥

न हि स्वर्गः अधिकारिविशेषणं, साध्यत्वात् ।

सिद्धमेव हि सर्वस्य[11] ×नियोज्यस्य[12] विशेषणम् ।
$जीवनादि, तथैवेह कामनैव[13] विशेषणम् ॥

---

[1] $M_4$ has नैयोगिकस्स सम्बन्धः स च तस्मादृते न हि, omitting the intermediary portion.
[2] $M_3$, My—नैयोगिकश्च
[3] $M_2$—वैनियोगकः । P and PM split this incorrectly as वै नियोगिकः
[4] $M_3$—भूते
[5] P, T, $M_3$, $M_6$—°इति
[6] $M_1$, & $M_7$—तदिष्टार्थः
[7] $M_1$—कारणत्वेन
[8] $M_4$—कल्प्यते
[9] $M_2$ & My read भिन्न for न हि
[10] My—विशिष्यते
[11] $M_2$, My—सर्वत्र
[12] $M_4$ omits नियोज्यस्य
[13] $M_2$, My read जीवनादि यथैवैकं कामनादि

---

* ‘धात्वर्थ’पदेन यागादिरुच्यते । धात्वर्थोत्तीर्णकार्यात्मा सम्बन्धः ।
§ ‘स च’ कर्मफलसङ्गमः ।
† स्वर्गकामरूपनियोज्यस्य क्रियासम्बन्धज्ञानम् ; तेन स्वर्गयागयोः सम्बन्धज्ञानम् ; तदन्यथानुपपत्त्याऽपूर्वकल्पनम् ; ततस्तस्य लिङ्वाच्यत्वकल्पनम् ; वाच्येऽपूर्वे यागस्य स्वर्गकामस्य चान्वयकल्पनम् ; एवं, ‘स्वर्गकामीयं यागसम्बन्धि अपूर्वम्’ इति ज्ञाते तदनन्तरमेव स्वर्गयागसम्बन्धकल्पनमिति अन्योन्याश्रयणप्रकारः समनुसन्धेयः ।
‡ ‘ज्योतिष्टोमेन स्वर्गकामो यजेते’त्यत्र ।
× ‘नियोज्यः’ पुरुषः ‘स्वर्गकाम’पदाभिहितः ।
$ ‘यावज्जीवमग्निहोत्रं जुहोति’, ‘यावज्जीवं दर्शपूर्णमासाभ्यां यजेत’ (see *Śābarabhāṣya* under II. iv. 1) इत्यादिषु नित्यविधिषु जीवनादिकं सिद्धमेव हि पुरुषस्य विशेषणं दृश्यते, न तु साध्यम् । एवं प्रकृतेऽपीति विभाव्यम् ।

अपि च, नियोज्यविशेषणतामनुभवतः स्वर्गादेः कीदृशं साध्यत्वम् ?

यदि साधनसम्बन्धयोग्यत्वं, नैव तावता[1] ।
स्वर्गेण सिध्यता भाव्यं, यावद्योगमजन्मतः[2] ॥
सिद्धि[3]पर्यन्तता तस्य *नियोगैकप्रमाणिका ।
नियोगः तत्प्रमाणश्चे[4]त्यन्योन्याश्रयणं ध्रुवम् ॥

[1] A reads नैतावता, making the metre defective

[2] A & $V_1$ read यावद्योग्यमजन्मनः; $M_1$, $M_4$, $M_5$, $M_7$ & My read यावद्योग्यमजन्मतः

[3] $M_1$—सिद्ध°

[4] PM, $M_2$, $M_3$, $M_5$, $M_6$, My, B, $V_1$, A—तत्प्रमाणं च°

* 'Niyoga' is another name coined by Prabhākara to denote Apūrva. See *Karmamīmāṁsā*, pp. 74-75:

Mīmāṁsā does not believe in any God that receives the offerings from the votaries and rewards them accordingly. "There must, therefore, be a capacity, which does not exist prior to the sacrificial action, either in the principal performance or in the agent, but which is generated in the course of the performance. Before a man performs a sacrifice, which will lead to heaven, there is an incapacity in the offering and in the man himself to secure that result, but when he has performed it, he becomes, as a result of the action, endowed with a potency, styled '*apūrva*', which in the course of time, will secure for him the end desired. The existence of this potency is testified to in the scriptures; its necessity is apparent by the means of proof known as Presumption (*arthāpatti*). We find in the Veda, assertions that sacrifices produce certain results, and, as the operation of the sacrifice, as we see it, is transient, the truth of the scripture would be vitiated if we did not accept the theory of Apūrva. Nor is there anything illogical in this doctrine; every action sets in force activities in substances or agents, and these come to fruition when the necessary auxiliaries are present. The action specified is called into existence by the injunction contained in the form of an optative in a sentence in the Veda.

From this doctrine, Prabhākara dissents, elaborating instead, a theory which is obviously a refinement on the simple view which Kumārila accepts from the older writers of the school and which best suits the Mīmāṁsā Sūtras. In his opinion, the injunction rests in the sentence as a whole, not in the optative verb, and he denies that from the action there arises directly the



यदि स्वर्गस्य साध्यत्वं, न नियोगस्य साध्यता[1] ।
साध्यद्वयं च नैकस्मिन् वाक्ये सम्बन्ध[2]मर्हति ॥

स्वतन्त्रं हि साध्यद्वयमेकवाक्यतां[3] निरुणद्धि[4] । नाऽननुगुणम् । अनुगुणं चैतत् साध्यद्वयम्[5]; नियोगसिद्धि[6]नान्तरीयकत्वात् स्वर्गसिद्धेः । यदाह—'नियोगसिद्धौ सर्वं तदनुगुणम्' इति, 'केन नेष्यते नियोगसिध्यर्था फलसिद्धि'रिति च । तस्मादविरोध[7] इति चेत्[8], न ।

स्वर्गसिद्धिं[9] विना किन्नु[10] नियोगस्य न सिध्यति ?
नाधिकारो, न विषयो, न चान्यत्[11] विध्यपेक्षितम् ॥

[1] B omits साध्यता

[2] $M_6$—सम्बन्धुम्

[3] $M_6$—°एकवाक्यम्

[4] $M_1$—न हि रुणद्धि

[5] $M_4$, B—साध्यत्वं द्वयम्

[6] $M_1$ has a lacuna from नान्तरीयकत्वात् upto फलसिद्धिः

[7] PM—°विरोधः

[8] P, T & My add तत्

[9] $M_1$—स्वर्गसिद्धम्

[10] My—किन्तु

[11] $M_1$—न वान्यत्

Apūrva. On the contrary the process is that the injunctive sentence lays down a Mandate, Niyoga; this excites the man to exertion, and this exertion pertains to some form of action, indicated by the verb of the injunctive sentence. The exertion produces in the agent a result (*kārya*) to which also the name of Niyoga is given by Prabhākara, on the ground that it is this which acts as an incentive to the agent to put forth exertion towards the performance of the action denoted by the verb of the injunctive clause. The Niyoga, however, is unable to produce its result, unless aided by something which Śālikanātha styles 'fate', nor is it apparent that either in his terminology, or in his view of the process, Prabhākara's doctrine is any superior to that of Kumārila. It seems as if primarily it arose from nothing more important than the observation that the result produced in the agent was in one sense his motive to action as much as the sentence directing the action to be done, leading to a transfer of the term Niyoga, naturally applicable to the sentence, to the condition in the agent to which the more orthodox name of Apūrva was usually applied." "In simple sacrifices, there is only one Apūrva produced, but in more complicated sacrifices, there may be several, as a rule, four.... But it is not every action which brings out an Apūrva; these actions, which are devoted simply to some material result, though a part of the sacrifice, such as the appointment of priests or the threshing of corn are not credited with any such effect, as they serve an immediate purpose and need no further explanation".

न हि नित्याधिकारेषु नियोगस्तामपेक्षते ।
न चान्यदिच्छतोऽन्यत्र नियुक्तिः[1] नोपपद्यते ॥

नियोगस्यैव महात्म्यात्[2] नित्येष्विव नियुज्यते ॥

नियोगो[3] हि प्रधानतयाऽधिगम्यमानः[4] स्वर्गमभिलषन्तमपि[5] स्वात्मन्याकर्षति[6], यथा[7]ऽनिच्छन्तमपि नित्ये कर्मणि निष्फले प्रवर्तयति; किञ्च—

स्वर्गं कामयमानो हि निमिषत्युन्मिषत्यपि ।
न च ते स्वर्गसिद्ध्यर्थाः; यागः[8] किं नैवमिष्यते ?

तत्साधनतया नैते[9] गृह्यन्त इति चेन्मतम् ।
यागादयः किं तद्बुद्धिग्राह्या विधिबहिष्कृताः ?

तत्र च—

साध्यसाधनसम्बन्धप्रतिपादनतत्पराः ।
यावन्न विधयः, तावन्नैष्फल्यं सर्वकर्मणाम् ॥

तस्मात्, लिङादिभ्यः[10] प्रथममिष्टसाधनतावगमः[11], ततो रागतः[12] प्रवृत्तिरित्येव[13] युक्तम् । तदपूर्व[14]कार्याभिधान एव मुख्या शक्तिः, इतरत्र[15] लाक्षणिकीत्यनुपपन्नम्[16] । अत एव यथायथं लौकिकशब्देभ्यः त[17]त्सिद्धार्थगोचरा बुद्धयो जायन्ते ।

---

1 $M_4$—नियुक्तिम्
2 P, PM, T, $M_3$, $M_5$, $M_6$, My, $V_1$, A—माहात्म्यम्
3 $M_2$—न योगो
4 P—अधिगम्यमान°; $M_1$—विधिगम्यमानः
5 $M_3$, $M_6$—°अभिलषितमपि
6 P, PM, T, $M_3$, $M_5$, $M_6$, $V_1$, A—आत्मन्याकर्षति
$M_1$—स्वात्मानं कर्षति;
$M_4$—स्वात्मन्याकर्षयति
7 $M_2$ adds नित्यम्
8 $M_4$, $M_7$, B—यागाः
9 P, PM, T—नैके
10 $M_1$—लङादिभ्यः
11 $M_3$, $M_6$—°इष्टसाधनतागमः
12 $M_4$—नागतः
13 $M_3$ omits इति
14 $M_4$—यदपूर्व°
15 $M_2$ adds तु
16 A—लाक्षणिकेत्येतदनुसन्धानम्; T, $M_1$ to $M_7$, My, $V_1$, B—लाक्षणिकेत्यनुपपन्नम्
17 $M_3$, $M_4$, $M_7$, B, omit तत्



[ लौकिकवचसामपि प्रामाण्यकथनम् ]

*ननु न[1] ताः शब्दमहिमभुवः, आनुमानिक्यो[2] हि ताः । तथा हि— †व्युत्पत्तिसमयसंविदितार्थप्रतिपादनसामर्थ्यान्यपि[3] पदानि क्वचित् व्यभिचारदर्शनजनित[4]संशयप्रतिबद्धानि[5] न[6] श्रुतमात्राण्यर्थं[7] निश्चाययन्ति । न च अनिश्चितोऽर्थो[8] ज्ञातो भवति, अनिश्चयात्मनो ज्ञानस्याभावात् ।

§तत्राज्ञातेऽपि[9] वाक्यार्थे श्रोतैवं[10] विचिकित्सते ।
ब्रवीत्य[11]न्योन्य[12]सम्बन्धयोग्यार्थानि[13] पदान्ययम् ॥

---

1 $M_3$ omits न
2 $M_4$, B -अनुमानिक्यो
3 $M_1$, $M_2$, $M_4$, $M_7$, My—°समर्थान्यपि
4 $M_2$ omits जनित
5 $M_1$—°प्रतिबन्धानि
$M_6$—°प्रतिबन्धनानि
6 $M_6$ omits न
7 $M_6$ adds न
8 $M_1$, $M_5$, $M_7$—अनिश्चितार्थो
9 $M_1$, B -°ज्ञातेऽपि; $M_6$—तत्राज्ञापितेऽपि
10 $M_3$—श्रोत्रैव
11 T records a variant प्रवेक्ष्य°
12 B adds त्व
13 $M_1$—°योगार्थानि

---

* This view of Prabhākara regarding the validity pertaining to the statements made by human beings, has already been stated and refuted briefly by Yāmuna. He now exposes in detail, the untenability and absurdity of this view and proves that even sentences uttered by people in the world possess verbal authority, but not inferential authority. See the verse "tasmādasti naditīre", *etc.*, following.

† *Cf. Prakaraṇapañcikā* II. 24, p. 14:

śaṅkyamānāyathārthatvaracanaṁ tena puṁvacaḥ ।
śrutamātrakamevārthe na tāvanniścayāvaham ॥

Also *vide ibid*: śl. 36, p. 15:

arthenaiva viśeṣo hi nirākāratayā dhiyām ।
na cāpratītenārthena viśeṣaścāvakalpate ॥

§ *Cf. ibid.* II. 38–40, p. 16:

" किन्त्वज्ञातेऽपि शब्दार्थे पदजाते श्रुते सति ।
विमर्शो जायते श्रोतुरीदृशो मतिशालिनः ॥
अन्योन्यान्वययोग्यार्थं पदजातं ब्रवीत्ययम् ।
आप्तस्तेनामुना नूनं ज्ञातस्तेषां समन्वयः ॥
न कदाचिदसम्बद्धानर्थानेष विवक्षति ।
न वाऽप्रतीतसम्बन्धानिति दोषो न कश्चन ॥"

न चाविज्ञात[1]सम्बन्धान् शब्दानाप्ताः प्रयुञ्जते[2] ।
तेनेदृशान्वयज्ञानमस्यास्तीत्यवगच्छति ॥

‡एवमन्वयज्ञानेऽनुमिते, तदुपदर्शितोऽर्थो[3] न शब्दमाकांक्षति । अतो लौकिकस्य वचसो वक्त्रनुभवपरतन्त्रतया तत्रैव[4] पर्यवसानमिति ।

तदसत् । न हि स्वभावतोऽर्थमवगमयन् शब्दः कचित् वक्त्राशयदोषवशीकारात् वितथ इत्यन्यत्रापि तत्सम्भावनया स्वारसिकीमर्थावबोधकतामुज्झितु[5]मर्हति । न हि मन्त्रप्रतिहतदशायां[6] हुतवहो न दहतीति । अन्यत्राऽपि तादृशदशा[7]शङ्कया न दहति । नाऽपि शुक्तिरजतधियमर्थव्यभिचारिणीं[8] इन्द्रियं दोष[9]वशादुपजन-

[1] $M_4$—न चाविज्ञान°
My—न च विज्ञात°

[2] $M_3$ reads this line and the above as one line : ब्रवीत्यन्योन्यसंबन्धात् शब्दानाप्ताः प्रयुञ्जते ।

[3] $M_2$, My—तदुपदर्शिकोऽर्थो

[4] My—तत्रैवम्

[5] $M_1$—°उपपादयितुम्

[6] $M_4$—मन्त्रप्रभेददशायाम् The Editor of 'P' opines that the reading should be मन्त्रप्रतिहतिदशायां; but the existing reading itself conveys the meaning clearly and is also correct.

[7] My omits दशा

[8] $M_2$, My—°अर्थव्यभिचारिणम्

[9] PM, $M_1$ to $M_6$, My, A, B & $V_1$ इन्द्रियदोष°

Also *cf. ibid*: V, p. 95 :

"यो हि पुरुषः एवमवधारितो नायमशक्तो, न प्रमादी, संभवदेतदर्थविषयप्रमाणः सकलाशयदोषरहितश्च; नायमविज्ञायार्थमन्वितार्थानि प्रयुङ्क्त इति तद्वाक्यप्रयोगस्यान्वयज्ञानपूर्वकत्वादन्वयज्ञानं तावदनुमीयते । अन्वयज्ञानाच्चान्वयोऽप्यनुमीयते । ज्ञानं हि ज्ञेयाविनाभावि, ज्ञेयानुमाने भवत्येव लिङ्गम् । तदेवं लौकिकाद्वचसो लिङ्गभूताद्वक्तृज्ञानमनुमीयते । ततोऽर्थं निश्चित्य व्यवहारः प्रवर्तते । एवं च निश्चितेऽन्वये निवृत्तानन्वयाशङ्काद्वाक्यादप्यर्थनिश्चयो जायते । किन्तु तस्यां दशायामनुवादकतैव । अत एव लौकिकवचने न शाब्दं प्रमाणम् ।"

‡ *Cf. ibid.* II. śls. 26–28; p. 15:

"तस्य ज्ञानं च वाक्येन लिङ्गभूतेन गम्यते ।
ज्ञात्वैवार्थं ब्रवीतीति य एवमवधारितः ॥
तस्य ज्ञानेन नियतं वाक्यं ज्ञानानुमापकम् ।
ज्ञानं चार्थाविनाभावि तेनार्थेऽपि विनिश्चयः ॥
ततोऽर्थे निश्चिते पश्चात्सोऽर्थो वाक्येन गम्यते ।
तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता ॥"



यत्[1] उपलब्धमिति घटादिकमपि[2] नावगमयति । अतो[3] विदितपदपदार्थसङ्गतेः[4] श्रोतुः सहसैव शब्दोऽर्थमवबोधयति; मूलज्ञानं न प्रतीक्षते ।

मूलज्ञानपरिज्ञानादर्वागर्थेऽपि बोधिते[5] ।
'कथमेवमयं[6] वेद'त्यनुमानं प्रवर्तते ॥
किमज्ञासीदयं वक्ता किञ्चिदित्यनुमित्ससे ।
विशिष्टार्थान्वयज्ञान[7]मनुमातुमथेच्छसि ॥
न तावदयमज्ञासीत् वक्ता किञ्चिदितीयता ।
*व्याहार[8]व्यवहारौ वा[9] स्यातां वाक्यार्थगोचरौ ॥

विशिष्टार्थान्वयगोचरचेतोऽनुमानं तु प्रथमतरप्रवृत्ततद्विषय[10]-शेमुषीमन्तरेणानुपपन्नमिति प्रागेव शब्दार्थोऽवगन्तव्यः । न ह्यनासादित[11]विषयविशेषसंसर्गाः संविदः परस्परतो व्यतिभिद्यन्ते[12] । न च तथा[13]नुमिताभिः अर्थविशेषः सिध्यति । यादृशान्वयप्रतिपादनयोग्या[14] पदरचना, सा तदन्वयज्ञानमापादयतीति चेत्, अवगतस्तर्हि प्रागेव अर्थानामन्वयः । न हि बुद्धावनारोपित[15] एवान्वयः प्रयोगं व्यवच्छिनत्ति ।

तस्मा'दस्ति नदीतीरे फलमि'त्येवमादिषु ।
या सिद्ध[16]विषया बुद्धिः, सा शाब्दी नानुमानिकी ॥

[1] P, PM, T, A, $M_5$ & $V_1$ omit उपजनयत्; $M_1$—उपशमयेत्

[2] A & $V_1$ omit अपि

[3] $M_1$, $M_7$—ततो

[4] $M_1$, $M_3$ to $M_7$, My, B, $V_1$ & A omit the '*Visarga*'

[5] P, PM, T, $M_3$, $M_5$, $V_1$ & A, read चोदिते

[6] My—कथमेतदयम्

[7] $M_2$—विशिष्टार्थान्तरज्ञानम्°
My—विशिष्टार्थान्वयि ज्ञानम्°

[8] $M_3$, B—व्यवहार°

[9] $M_2$, $M_4$, $M_7$, My, B, read च; $M_3$ omits वा

[10] $M_2$, My omit तद्विषय; $M_1$—°तद्विषये°

[11] $M_1$—न ह्यन्यासामुदित°

[12] $M_1$, $M_2$, $M_4$, $M_7$, My & B read भिद्यन्ते, omitting व्यति

[13] My omits तथा

[14] $M_1$, $M_2$, $M_7$ & My add या

[15] $M_5$ reads आरोपितः

[16] $M_1$ $M_3$, $M_6$—सिद्धि°

* व्यवहारः कायिकः; व्याहारः वाचिकः ।

ततश्च—अपूर्व[1]कार्यगोचर एव शब्दः प्रमाणमिति—

स्वसिद्धान्तचिराभ्यासव्यामुग्धाबल[2]बुद्धिभिः ।
उक्तम्—उक्तेन मार्गेण युक्ताऽन्यत्रापि[3] शक्तता ॥

[ वेदान्तवचसां प्रामाण्यसमर्थनम् ]

ततश्च, यान्येतानि विलक्षणपुरुषप्रतिपादकानि[4] वेदान्तवचांसि—*'स एष सर्वाधिपतिः, सर्वस्येशानः, सर्वमिदं प्रशास्ति', †'तस्याध्यक्षमिदं सर्वम्' इत्यादीनि, तान्यपि तत्र प्रमाणं, तद्विषयासन्दिग्धाविपर्ययवि[5]ज्ञानहेतुत्वात् ।

§न च परिनिष्ठितवस्तुनि[6] साधकबाधकयोरन्यतरोपनिपातसम्भावनाभावितानुवादविपर्ययपर्यालोचनया[7] तद्गोचरवचसां प्रामाण्यप्रच्युतिः; कार्यगोचराणामपि तत्प्रसङ्गात् । कार्यमपि मानान्तरवेद्यमेव समिदाहरणादि—$'तच्च मानान्तरेणापि वेद्यमोदनपाकवत्' इत्यभ्युपगमात् ।

अथ विलक्षणा[8]ग्निहोत्रादिविषयकार्यस्यासम्भावितमानान्तरतया तत्प्रतिपादयद्वचः प्रमाणं, हन्त तर्हि निरतिशयावबोधैश्वर्यमहानन्दसन्दोहवपुषि भगवति न[9] मानान्तरसम्बन्धगन्ध इति सर्वं समान[10]मन्यत्राभिनिवेशात् ।

अपि च—

[1] $M_3$, B—पूर्वं°
[2] P—°व्यामुग्धबल°
$M_7$, My—°व्यामुध्याबल°
[3] $M_3$—युक्तान्युक्तापि
[4] $M_3$—°प्रतिपादकपराणि
[5] P, PM & $M_3$ omit वि
[6] $M_4$ omits नि
[7] $M_4$ & B—°पर्यालोचना°
[8] $M_6$ adds आदि
[9] $M_3$ omits न
[10] B, reads इति सर्वत्र मानम्°

* *Bṛhadāraṇyaka* V. vi. 1.
† To be identified.
§ This and the succeeding paragraph are mere repetitions. See. pp. 39-40 above.
$ *Vide Prakaraṇapañcikā* II, p. 180:
"कृतिसाध्यं प्रधानं यत्, तत्कार्यमवसीयते ।
तच्च मानान्तरेणापि वेद्यमोदनपाकवत् ॥"



प्रमाणान्तरदृष्टार्थविषयिण्यपि शेमुषी ।
प्रमाणमेव, तत्पूर्वं न चेत् स्वार्थं[1] विगाहते ॥
तस्य सम्भावनामात्रादप्रामाण्यमलौकिकम् ॥

[ भगवतः सहजसार्वज्ञ्यसम्भवनिरूपणम् ]

तस्मात् *परिनिष्ठितानुष्ठेयादिभेदशून्यं[2], असन्दिग्धाविपर्यस्तविज्ञानं प्रमाणमे[3]ष्टव्यम् । अत इदमपास्तम्—†'प्रसिद्धैः करणैरेव[4] सार्वज्ञ्यं नान्यथेति यत्' । यतः श्रुतिरेव तत्र परि[5]पन्थिनी[6]—§'पश्यत्यचक्षुः, स शृणोत्यकर्णः[7]', ‡'यः[8] चक्षुषा न पश्यति, यश्चक्षूँषि पश्यति', $'न तस्य कार्यं[9] करणं च विद्यते, स्वाभाविकी ज्ञानबलक्रिया[10] च' इत्यादिका । न चासां गुणवादत्वं, प्रमाणाभावात् ।

अलब्धमुख्यवृत्तीनां गुणवाद[11]समाश्रयः ।
लभ्यते चेह[12] मुख्योऽर्थ[13] इति तत्कल्पना मृषा ॥

नन्विहापि मुख्यार्थभङ्गकारणमस्ति—प्रमाणान्तरविरोधः ।

कुतः प्रमाणान्तरात्[14] ? न तावत् प्रत्यक्षात् । न हि प्रत्यक्षमुदीरितपुरुषाभावावभासकमु[15]दीयमानं दृष्टम् । योग्यानुपलम्भाद-

[1] $M_3$—वार्थम्; $M_6$—स्वमर्थम्
[2] $M_1$—°वेदशून्यम्; $M_4$, B—°भेदशून्यम्
[3] My—°विज्ञानप्रमाणम्
[4] $M_1$, $M_7$—कारणैरेव
[5] B omits परि
[6] A, $M_1$, $M_3$, $M_7$, $V_1$, B—परिबन्धिनी
[7] $M_1$, $M_3$, $M_4$, $M_7$, My & B add इति
[8] $M_1$ omits यः
[9] B, adds कायम्
[10] A omits क्रिया
[11] $M_2$ & My—मुख्यवृत्ति°
[12] $M_1$, $M_2$, $M_4$, $M_7$, My, B—त्वत्र
[13] $M_1$, $M_2$, $M_3$, $M_7$, My—मुख्यार्थः
[14] $M_2$—°प्रमाणान्तरविरोधात्
[15] $M_1$—°पुरुषाभावावभासम्°; $M_2$, $M_3$, $M_4$, $M_7$, My—°पुरुषाभावभासकम्°
$M_6$—°पुरुषाभावाभासकम्°

* परिनिष्ठितत्वं सिद्धार्थबोधकत्वम्; अनुष्ठेयत्वं पराभीष्टं कार्यबोधकत्वम् । उभयोरेतयोर्न कुत्राप्याग्रहः कार्यं इति ग्रन्थकृदाशयः । ज्ञानप्रामाण्यस्य तादृशभेदाप्रयोजकत्वात्, विपर्ययादिशून्यत्वस्यैव तत्त्वाच्च ।
† This line runs like a verse.
*Cf. Ślokavārtika* under I. 1.2; śl. 111b :
'यदि षड्भिः प्रमाणैस्स्यात् सर्वज्ञः, केन वार्यते ?'
§ *Śvetāśvatara* : III. 19.
‡ *Kenopaniṣat* : I. 6a; but the reading found is :
"यच्चक्षुषा न पश्यति, येन चक्षूँषि पश्यति" ।
$ *Śvetāśvatara* : VI. 8.

भावनिश्चय इति चेत्, न। *प्रमाणगोष्ठीज्येष्ठेन शास्त्रेणैवोपलम्भनात्[1]। नाऽप्यनुमानात्। †तद्धि शीघ्रजन्मागमिक[2]प्रत्ययप्रतिक्षिप्त[3]प्रतिबन्धं[4] कथमिव मन्थरप्रवृत्ति[5] प्रादुर्भवति[6]?

किं चैवं सति यागादेः[7] स्वर्गापूर्वादिसङ्गतिः।
क्रियात्वेन विरुध्येत, शास्त्रं चेत्तन्न बाधते॥

‡यूपादित्यादितादात्म्यं प्रत्यक्षेणैव[8] बाधितम्।
विस्पष्ट[9]दृष्ट[10]भेदत्वात् काष्ठसावित्रबिम्बयोः॥

अपि च तत्र §सन्निहितयूपाञ्जनविध्येक[11]वाक्यतया अर्थवादत्वात् युक्तं गुणवादत्वा[12]श्रयणम्। न चेह तथा[13] विध्यन्तरम[14]स्ति, यच्छेषतया[15]ऽर्थवादः[16] स्यात्।

---

[1] $M_4$—°उपलम्भात्
[2] $M_1$—°आगामिकम्°; $M_2$—°आगतिक°
[3] P & PM—°प्रक्षिप्त°
[4] A, $M_1$, $M_2$, $M_4$, $M_5$, $M_7$, My, $V_1$ & B—°प्रतिबद्धम्
[5] $M_1$, $M_3$, $M_5$, $M_6$, $V_1$ & T—प्रवृत्तिः; $M_2$, $M_4$—°वृत्तिः; $M_7$, My, B—°वृत्ति°
[6] $M_2$ & My add इति
[7] $M_6$—यागाद्ये
[8] B—प्रत्यक्षलक्षणैव
[9] B—विस्पष्टम्
[10] $M_2$—°स्पर्श°; My--°स्पष्ट°
[11] $M_2$, My—°विध्यैक°
[12] $M_1$ adds अभेदत्व
[13] $M_2$ & My omit तथा
[14] $M_3$—विध्यनन्तरम्°
[15] $M_1$—यथेच्छतया°
[16] $M_6$—°अर्थवादत्वम्

---

* This line too is metrical.

† शब्दप्रमाणापेक्षया अनुमानस्य दौर्बल्यमेव। शाब्दं ज्ञानं शीघ्रतरम्। व्याप्तिज्ञानानन्तरलब्धप्रतिष्ठस्यानुमानस्य मन्थरप्रवृत्तिरेवेति भावः।

‡ See p. 47 above for the Mīmāṁsaka's argument. The illustration of the *arthavāda :* " āditya yūpaḥ " [ *Taittirīya Brāhmaṇa* : II-i-5-2 ] was put forth there. This view is now being refuted.

The figurative statement " ādityo yūpaḥ " is made on the ground of similarity of brightness ( *tejasvitva* ) between the Sun and the sacrificial post. The relevant *sūtra* is " sārupyat " [ *Pūrvamīmāṁsā* : I. iv. 25 ].

§ The *ṛk* to be repeated while anointing the *yūpa* with ghee is : " añjanti tvāmadhvare devayantaḥ " ( *Taittirīya Brāhmaṇa* : VI-ii. p. 142 ). For the derivation of the term *yūpa*, see *ibid* : VI-i, the opening part.



अथ विध्यन्वयाभावे पुरुषार्थत्वहानतः[1]।
अध्याहृत्य विधिं तत्र[2] शेषत्वं परिकल्प्यते॥

यदाऽऽहुः—

*'यावत् खलु[3] प्रमातॄणां प्रवर्तननिवर्तने।
शब्दा न कुर्वते, तावन्न निराकांक्षबोधनम्॥'

इति, तन्न।

ऋतेऽपि विधि[4]सम्बन्धात् हृष्टैव[5] हि पुमर्थता।
'पुत्रस्ते जात' इत्यादौ तथेहापि भविष्यति॥

न च तत्र विध्यध्याहारः[6]। अन्तरेणाऽपि विधिं पुत्रजननावगमादेव हर्षोत्पत्तेः। तथा, 'का क्रिया?' 'पाक' इत्यादिप्रश्नोत्तरव्यवहारेषु[7] प्रष्टृजन[8]जिज्ञासितक्रियाविशेषप्रतिपादनमात्र[9]निराकांक्षः शब्दो[10] न विध्यध्याहारमपेक्षते।

†इह तु ब्रह्मविज्ञानं महानन्दफलं श्रुतम्।
§'ब्रह्मवित् ब्रह्म[11] भवति', ‡'प्राप्नोति ब्रह्मवित् परम्'॥
¶'अश्नुते ब्रह्मणा सार्धं सर्वान् कामान् स सामगः[12]'।
इदमादि[13]त्रयीवाक्यैः व्यक्ता[14] तस्य पुमर्थता॥

---

[1] $M_1$, $M_2$, $M_4$, $M_6$, $M_7$, My, B—°हानितः; $M_3$, $M_5$—°हानत:
[2] My—तत्त्व°
[3] $M_3$ omits खलु
[4] A—धर्मे°
[5] My—दृष्टैव
[6] $M_4$—°विध्यध्याहार:
[7] My—°आकारेषु
[8] $M_6$—प्रष्टु: जन°; B—पृष्टजन°; My—प्रष्टृजनि°
[9] $M_6$—°मात्रात्°
[10] $M_7$, My—°निराकांक्षशब्दो
[11] $M_4$ omits ब्रह्म
[12] $M_3$—सागमः; $M_6$—सङ्गतः
[13] $M_3$—इत्यादिभिः; My—एवमादि°
[14] $M_2$, My—युक्ता

---

* To be identified.

† Note the way in which Yāmuna connects the previous discussion with the main theme, *viz.*, the validity of the *Pāñcarātra*-texts, based upon the authorship of Nārāyaṇa, the Supreme and Omniscient Being.

§ *Cf. Muṇḍaka* : III-ii-9 : " ब्रह्मवेद ब्रह्मैव भवति "।

‡ *Cf. Taittirīya* : II-i-1 : " ब्रह्मविदाप्नोति परम् "।

¶ *Cf. ibid* : " सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता "।

[ पञ्चरात्रस्य भगवदनुभवमूलतया प्रामाण्यसमर्थनम् ]

*तदेवमुदीरितश्रुतिशतसमधिगतावितथसहजसर्वसाक्षात्कार[1]-कारुण्यादिकल्याणगुणैकराशौ भगवति सिध्यति, सिध्यत्येव तदनुभवमूलतया[2] तन्त्र[3]प्रामाण्यम् ।

ननु विरचितनीत्या[4] काश्चिदाम्नायमूर्ध-
प्रमित[5]स[6]हजसर्वज्ञानवानस्तु नाम ।
†स च 'हरि'रिति यावन्नावगम्येत सम्यक्
न खलु भवति[7] तावत् पञ्चरात्रं प्रमाणम् ॥

[ वासुदेवस्य श्रुतिस्मृत्यादिबलेन पारम्यप्रतिष्ठापनम् ]

§अत्यल्पमेतत्; न ह्यत्र त्रयी[8]विदो[9] विवदन्ते,[10] यद्वासुदेवः परमात्मा अखिल[11]जगत्कारणमिति ।

[1] $M_2$ –°साक्षात्कारिणि°

[2] $M_1$, $M_2$, $M_4$, $M_7$, My & B, omit तदनुभवमूलतया

[3] $M_3$—तत्र°; $M_1$ adds प्रमाण

[4] $M_6$ adds नित्य:

[5] B adds सर्वं

[6] $M_1$ has a lacuna from °हज up to नाम

[7] $M_3$ reads भगवति

[8] $M_1$ has a gap from यी to व in विवदन्ते

[9] $M_6$—वेदविदो

[10] A, $M_2$, $M_5$, $M_6$, $M_7$, B –विवादन्ते

[11] A, $M_6$—निखिल°

*Cf. Aniruddhasaṁhitā* : II. 7-8 :

"तथा सर्वेषु शास्त्रेषु पञ्चरात्रं वरिष्ठकम् ।
श्रुतिमूलमिदं तन्त्रं प्रमाणं कल्पसूत्रवत् ॥
पञ्चरात्रं विशेषेण विष्णुना भाषितं यथा ।
अत: प्रमाणं लोकेऽस्मिन् धर्मशास्त्रेषु सर्वशः ॥"

Also *cf. Viṣṇusaṁhitā* : ch. II :

"वेदमूलतया तन्त्रमाप्तमूलतयाऽथवा ॥ [11 b]
पुराणवत्प्रमाणं स्यात् तथा मन्वादिवाक्यवत् ।" [12 a]
"आप्तप्रोक्ततया तन्त्रं प्रमाणमिति ये विदुः ।
वेदप्रामाण्यमप्याहुराप्तलमूतयैव ते ॥" [19]
"विष्णोर्धर्मप्रवक्तृत्वात् तत्प्रोक्तं मनुवाक्यवत् ।
ब्रह्मविष्णू हि धर्माणां प्रवक्तारौ बुधैस्स्मृतौ ॥" [21]

† The doubt expressed here by the opponent is as to who, among the trinity—Brahmā, Viṣṇu and Śiva, is the Supreme Deity.

§ The following is a brief exposition of the Supremacy of Nārāyaṇa. The *Puruṣanirṇaya* of Yāmuna, solely devoted to this question is yet to be traced out and as such, the importance of this part of the text need not be overemphasised. It indicates the way at least, in which the author had dealt with this question in the work.



श्रूयते हि स वेदान्ते*'ष्वा[1]त्मा नारायणः परः' ।
‡'सत्यं ज्ञानमनन्तं' च, §'तद्विष्णोः परमं पदम्' ।
†'परा प्रकृतिरध्यक्षो वासुदेवः', तथा 'परः'[2] ॥
**'एकः परस्ताद्य[3] इदं[4] बभूव'
††'यस्मात्परं नाऽपरमस्ति किञ्चित्' ।
इत्युक्तवाक्यानुगुणं[5] ¶'यतो वा
इमानि भूतानि' §§'सदेव सोम्य[6]' ॥
इत्यादिवाक्यं च, ततस्स विष्णुः
त्रयीशिरस्सिद्ध[7]विशुद्धबोधः[8] ।
$न चान्यस्मात् जगज्जन्मस्थितिध्वंसाः श्रुतौ श्रुताः ।
यतश्चैते स[9] सर्वज्ञः परमात्मेति सम्मतम् ॥

अमुमेव परमात्मानं द्वैपायनपराशरनारदप्रभृतिमहर्षिवचनेभ्यः प्रतिप[10]द्यामहे[11] । तथा हि—

[1] $M_6$ reads श्रूयते हि सर्ववेदान्तेषु

[2] $M_1$ to $M_6$, $M_7$, My, $V_1$, A & B—परे

[3] $M_4$, B—°द्ये

[4] $M_1$ omits इदम्

[5] P, PM—°वाच्यानुगुणम्

[6] P, PM, T, $M_3$—सौम्य

[7] $M_3$—°शुद्ध°

[8] $M_1$, $M_2$, $M_4$, $M_7$, My, B—त्रयीशरीरः सुविशुद्धबोधः

[9] A, B, $M_7$—यतश्चैतेन

[10] $M_1$ has a lacuna : °प्रतिप..तथाहि

[11] $M_2$, My, B—प्रतिपाद्यामहे

* *Mahānārāyaṇa* : XI. 4 ‡ *Taittirīya* : II-i-1.

§ *Yajurveda* : VI-5; also *Kaṭhopaniṣat* : III-9.

† To be traced out.

** This appears in the *Āyuṣyasūkta*, beginning with "यो ब्रह्मा ब्रह्मण उज्जहार". The reading found is "एकः पुरस्ताद्य इदं बभूव". It appears on folio 15 b of palm-leaf *ms.* in Grantha, under R. No. 657, deposited in the Govt. Or. Mss. Library, Madras, and also on folio 42 a of another p.l. *ms.* in Grantha, R. No. 67 from the same library.

†† *Śvetāśvatara* : III-9; ¶ *Taittirīya* : III-i-1; §§ *Chāndogya* : VI-ii-1.

$ *Cf. Brahmasūtra* I-i-2 : "जन्माद्यस्य यतः" ।

§‘ विष्णौ जगत् स्थितं सर्वमिति विद्धि परन्तप ।
सृजत्येष महाविष्णुः[1] भूतग्रामं चराचरम् ॥
एष चाक्षि[2]पते काले, काले विसृजते पुनः ।
अस्मिन्[3] गच्छन्ति विलयमस्माच्च प्रभवन्त्युत ॥’
†‘ अनादि[4]निधनः श्रीमान् मुनि[5]र्नारायणः प्रभुः ।
स वै सृजति भूतानि स्थावराणि चराणि च ॥’
*‘ स ब्रह्म परमं चे’ति तथाऽन्यत्रापि पठ्यते[6] ।
‘केशवो भरतश्रेष्ठ ! भगवानीश्वरः परः ॥
पुरुषस्सर्वमित्येतत्[7] श्रूयते बहुधा श्रुतौ । ’††इति ।
‘तत्त्वं जिज्ञासमानानां हेतुभिस्सर्वतोमुखैः ।
तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः ॥’ ‡इति ।

तथा दानधर्मे—

‘परमात्मा परश्शान्तः पद्मनाभः परायणः ।
इति वेदरहस्यं तु किं[8] न[9] वेत्सि पुरन्दर ॥§§
तत्प्रसादाद्वयं[10] सर्वे लोकानां स्थितिहेतवः ।
आप्ताश्चा[11]मरमुख्याश्च[12] देवाश्च[13] स्थानिनो[14] मताः ।§§
यदि विष्णुरुदासीनो नास्माकं विद्यते शुभम् ।’§§
इति रुद्रस्य वचनं; तथा भारतमात्स्ययोः[15] ॥

---

1 $M_2$—महान् विष्णुः
2 $M_1$ has a gap चाक्षि...काले
3 $M_3$—तस्मिन्
4 $M_1$ adds मध्य
5 $M_1$ omits मुनिः
6 $M_1$—तथाऽन्यत्र च कीर्त्यते
7 $M_1$, $M_7$—°इत्यादौ
8 $M_3$ omits किम्
9 PM—किं नु
10 $M_1$, $M_2$, $M_7$, My—स्वयम्
11 $M_6$—आपगाश्च°
12 $M_2$—आप्तश्चामरमुख्यश्च
13 A, T, $M_3$, $M_6$ & B—वेदाश्च
14 $M_3$, $M_6$—°आस्थानिनो
15 $M_7$—°मत्स्ययोः

---

§ *Mahābhārata* ( Cr. edn. ) XII. 271. 7-8. Variant : महाबाहो for महाविष्णुः ।
† *Ibid.* XII. 271. 19. Variant : हरिः for मुनिः ।
* *Ibid.* XII. 280. 26 b. Variant परमो for परमं ।
†† *Ibid.* XII. 200.5. Variants : प्रभुः for परः; इत्येव for इत्येतत्; विभुः for श्रुतौ ।
‡ *Ibid.* XII. 335. 83b-84a.
§§ To be identified.



‘तत्रः यः परमात्मा हि[1] स[2] नित्यो निर्गुणश्शुभः[3] ।
स वै नारायणो ज्ञेयः, सर्वात्मा पुरुषो हि सः* ॥’ इति ।

तथा वाराहे[4]—

‘यस्य देवस्य[5] चरितं व्रतं[6] समभवद् भुवि ।
कोऽन्यस्तस्मादभ्यधिको मुक्त्वा नारायणं प्रभुम्’ ॥† इति ।
‘नारायणात्परो देवो न भूतो न भविष्यति ।
एतद्रहस्यं वेदानां पुराणानां च सत्तम[7] ॥’‡ इति ।

तथा लैङ्गे[8]—

‘स एकः पुरुष[9]श्रेष्ठः परमात्मा जनार्दनः ।
तस्मा[10]द्ब्रह्मा, ततो रुद्रः, ततश्चैवाखिलं जगत् ॥’§

तथा—

‘विष्णोस्सकाशादुद्भूतं जगत् तत्रैव च स्थितम् ।
स्थितिसंयमकर्तासौ ’¶ इति पाराशरं वचः ॥

तथा मानवे—

---

1 $M_4$, B—तु
2 My—यो
3 B—°श्रुतः
4 $M_1$, $M_3$, $M_4$, B—वराहे
5 B—वेदस्य
6 $M_1$ $M_7$—हितम्; $M_2$, $M_4$, B—हृतम्
7 P, PM, T, $M_2$ to $M_7$, B, $V_1$—सत्तमाः
8 $M_1$, $M_4$, B—लैङ्ग्ये
9 P, PM, $M_3$—पुरुषः
10 All but $M_1$—यस्मात्°

---

* *Mahābhārata* XII. 339. 14. Variants : नित्यं for नित्यो; हि for वै ।
*Cf.* also *ibid.* XIII. App. 13, lines 20-21 :
“ आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ”
† To be traced out.
‡ Ch. 73. śl. 52.
§ *Liṅgapurāṇa* : uttarabhāga : Ch. I. śl. 7b-8a. There the reading is :
“ य एकः पुरुषश्रेष्ठः परमात्मा जनार्दनः । यस्माद्ब्रह्मा ततस्सर्वं समाश्रित्यैव मुच्यते ॥ ”
¶ *Viṣṇupurāṇa* : I. 1. 35. The remainder of the *śloka* is : ‘ जगतोऽस्य जगच्च सः’

'नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।
अण्डस्यान्तस्त्विमे[1] लोकाः, सप्तद्वीपा च मेदिनी ॥'*

[ रुद्रादेः परमात्मत्वाभावसमर्थनम् ]

तस्मादीदृश[2]श्रुतिस्मृतीतिहासपुराणपर्यालोचनया अखिलजगत्कारणं परमात्मा वासुदेव इति निश्चीयते ।

न चैवं[3] परमात्मत्वं रुद्रादेः श्रुतिषूदितम्[4] ।
प्रत्युतोत्पत्तिमेवाहुः †तस्यैकायनशाखिनः ॥
‡‡'तमो वा इदमि'त्यादौ, तथर्ग्वेदेऽपि[5] दृश्यते ।
यतो[6] हि रुद्रस्संजज्ञे,[7] तच्छ्रेष्ठं भुवनेष्विति ॥—

§§'तदिदास भुवनेषु ज्येष्ठम्' इति[8] ।

तथा रौद्रं[9] पदं स्पष्टं कर्मजन्यं प्रतीयते ।
महिमानं निजं लेभे विष्णोरभ्यर्चनादिति ॥—

**'अस्य देवस्य' इति[10] ।

††'ललाटादभवद्बिन्दुः[11], तस्माद्रुद्रो व्यजायत[12]'।
इत्यादिकाश्च श्रुतयो रुद्रोत्पत्तिं वदन्ति वै ॥

---

[1] $M_2$ & My—°स्थिताः
[2] My omits ईदृश
[3] P, PM, T, $M_3$, $M_5$, $M_6$, A, $V_1$, B—न चैव
[4] $M_1$—श्रुतिदूषितम्
[5] $M_1$,, $M_2$, $M_7$, My—तथा श्वेतेऽपि P, PM, T, $M_3$, $M_4$, $M_6$ B—तथा वेदेऽपि
[6] $M_1$, $M_7$, B—एको
[7] $M_2$, My—एको रुद्रः संजज्ञे; $M_3$—°रुद्रं जज्ञे
[8] $M_1$—तदिदं सर्वभुवनेषु ज्येष्ठमिति
[9] $M_3$—रुद्रम् ; My—रौद्र°
[10] PM omits इति
[11] My—°क्रोधजो बिन्दुः
[12] $M_3$—रुद्रोऽप्यजायत

---

* This verse is not found in the Manusmṛti commented by Bhaṭṭa Medhātithi. It is however, found inserted between the 10th and 11th verses of the first chapter in the *Manvarthamuktāvali* with Kullūka's commentary [ Kāśī Skt. Series, 1935 ]. Kullūka too did not comment upon it.

† The Pāñcarātrins are the followers of the *Ekāyanaśākhā*, one of the redactions of the *Śukla Yajurveda*.

‡‡ *Maitrīyopaniṣat* V. 2.

§§ *Ṛgveda* X. 120. i.

** *Ibid.* VII. 40. 5.

†† *Cf. Subālopaniṣat* II. 1 : "ललाटात् क्रोधजो रुद्रो जायते ।"



एवं च सति, रुद्रादिमहिमावेदिका इव ।
या वाचः, ताः स्तुतिपराः §§'श्रोत्रं ब्रह्मे'ति गीरिव ॥

एतेन रुद्रादीनां परमात्मत्वप्रतिपादकपुराणवादाः[1] प्रत्यक्षश्रुतिविरोधात् न मुख्यार्थाः ।

यद्वा, त्याज्यतया तन्त्र[2]सिद्धान्तप्रतिपादकाः[3] ।
अवैदिकेषु तन्त्रेषु तन्माहात्म्यं हि कथ्यते ॥

[ विष्णोः परमात्मत्वदृढीकरणम् ]

*वेदसिद्धान्तमार्गेषु विष्णुरेव परस्स्मृतः ॥

तद्यथा वैष्णवे[4] —

†"परमात्मा च सर्वेषामाधारः परमेश्वरः[5] ।
विष्णुनामा स वेदेषु[6] वेदान्तेषु च गीयते ॥"

वाराहे—

‡"विष्णुरेव परं ब्रह्म त्रिभेदमिह[7] पठ्यते ।
वेदसिद्धान्तमार्गेषु[8], तन्न जानन्ति मोहिताः ॥
$नारायणात् परो देवो न भूतो[9] न भविष्यति ।
एतद्रहस्यं वेदानां पुराणानां च सत्तम[10] ॥" इति ।

---

[1] $M_1$—°वादात्
[2] $M_1$, $M_7$—तत्र
[3] A—°प्रतिपादिकाः
[4] $M_1$, $M_2$, $M_4$, $M_7$, My, & B, omit वैष्णवे
[5] $M_1$, $M_2$, $M_4$, $M_7$, My, B—परमः स्मृतः A, $M_5$—पुरुषोत्तमः
[6] $M_3$, $M_6$—देवेषु
[7] $M_6$—°अपि
[8] $M_3$—वेदान्तसिद्धमार्गेषु
[9] My—भूतम्
[10] P, PM, T, $M_1$ to $M_7$, $V_1$, B—सत्तमाः

---

§§ *Bṛhadāraṇyaka* IV. i. 5: "श्रोत्रं वै ब्रह्म" ।

* This line occurs below. It is from the *Bhaviṣya Purāṇa*, to be identified.

† *Viṣṇupurāṇa* VI. iv. 39.

‡ *Varāhapurāṇa* [ Sri Venkatesvara Press, Bombay ], Ch. 72. śl. 4.

$ Ch. 73, śl. 52.
Also *cf. ibid.* Ch. 70, śl. 26a :
"न तस्मात् परतो देवो भविता न भविष्यति ।"

तथा मात्स्ये—

* " सात्त्विकेषु तु[1] कल्पेषु विष्णोर्माहात्म्यमुच्यते ।
अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते[2] " ॥

तथा लैङ्गे[3]—

§ " न हि विष्णुमृते काचित् गतिरन्या विधीयते ।
इत्येवं[4] सततं वेदा[5] गायन्ते[6] नात्र संशयः " ॥ इति ।

तथा वायवीये—

† " सहस्रबाहुः परमः प्रजापतिः
त्रयीपथे यः पुरुषो निरुच्यते[7] " । इति ।

तथा भविष्यति—

† " वेदसिद्धान्तमार्गेषु विष्णुरेव पर[8]स्स्मृतः ।
विष्णुरेव नरश्रेष्ठो[9] महिष्ठः पुरुषोत्तमः " ॥ इति ।

सर्वं चैतत् $पुरुषनिर्णये निपुणतरमुपपादितमिति नेह प्रपञ्च्यते । ततश्च[10]—

[ विष्णोः पञ्चरात्रप्रणेतृत्वकथनम् ]

श्रुतिमूर्ध्नि प्रसिद्धेन वासुदेवेन भाषितम् ।
तन्त्रं मिथ्येति[11] वक्तुं नः कथं जिह्वा प्रवर्तते ?

---

1 $M_2$, $M_6$—च
2 P, PM add इति; $M_1$ adds : राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः
3 $M_1$ - लैङ्ग्ये
4 T, $M_1$ to $M_7$, My, $V_1$, A —इत्येव
5 A—देवाः
6 $M_3$, $M_6$—गायन्तः
7 $M_1$—त्रयीपथैः पुरुषोऽस्निरुच्यते
8 B—पुरः
9 $M_1$, $M_3$, $M_4$, $M_6$, $M_7$, My, B—विष्णुरेव हि नः श्रेष्ठः; $M_2$—विष्गुरेव हि स श्रेष्ठः
10 $M_2$ & My omit ततश्च
11 $M_1$, $M_7$, B—तन्त्रमित्येव

---

* *Matsya Purāṇa* Ch. 53, śl. 67b-68a.
§ *Liṅga Purāṇa* [ *Pūrva* ] Ch. 24, śl. 143.
† Passages to be identified.
$ *Puruṣanirṇaya* is another work of Yāmuna, which is yet to be recovered.



स[1] हि[2] सहजसंवेदनसाक्षात्कृतदीक्षाराधनादिधर्मः[3] स्वर्गपुत्रादिवैषयिकसुखमनेकदुःख[4]संभिन्नं न[5] चातिचिरमनुवर्तत इति तदपि दुःखपक्ष एव निक्षिप्य, मोक्षाय गृहेभ्यः प्रव्रजद्भ्यः[6] शाण्डिल्यनारदादिपरमर्षिभ्यः[7], तदभिलषितनिरतिशयनिःश्रेयसैकसाधन[8]-स्वावगमाराधनावबोधिनीः पञ्चरात्रसंहिताः[9] निरमिमीतेति[10] निश्चीयते ।

[ तन्त्रान्तराणां भ्रान्तिमूलत्वकथनम् ]

न च तन्त्रान्तरेष्वेष[11] न्यायः प्रसरमर्हति ।
यतस्तत्तन्निबन्धॄणां विभ्रमाद्यपि[12] सम्भवि[13] ॥

प्रत्यक्षादिप्रमाणानां न हि मूलत्वसम्भवः ।
तन्त्रान्तरेषु, शास्त्रं तु मूलं तैरेव नेष्यते ॥

अन्यच्च, वेदसिद्धान्तविरुद्धार्थाभिधानतः ।
प्रत्यक्षश्रुतिमूलत्वकल्पना तेषु बाध्यते ॥

[ अथ शैवमतोपन्यासः ]

यथा[14] माहेश्वरे तन्त्रे* विरुद्धं बहु जल्पितम्[15] ।
चतुर्विधा हि तत्सिद्धचर्यामार्गानुसारिणः ॥

---

1 P—न
2 $M_4$ omits स हि
3 All the mss. and printed texts do not have the ' *visarga* '.
4 $M_6$ —°सुखमनोदुःख°
5 A, $M_2$, $M_7$, B—omit न
6 $M_1$—प्रव्रजत्°
7 P—परमऋषिभ्यः
8 $M_6$—°साधनत्वेन
9 P, PM, T, $M_6$—°अवबोधिनीं पञ्चरात्रसंहिताम्
10 $M_2$—निरममीतेति
11 PM—°एव
12 $M_1$, $M_7$—संभ्रमाद्यपि
13 My—सम्भवेत्
14 $M_1$, $M_2$, $M_4$, $M_7$, My, B—तथा
15 $M_1$, $M_4$—कल्पितम्

---

* The followers of the *Māheśvara* Doctrine are fourfold : *Śaivas, Pāśupatas, Kāpālikas* and *Kāruṇikasiddhāntins,* according to Vācaspati and Ānandagiri. Yāmuna calls the fourth group, *Kālāmukhas.* Rāmānuja follows Yāmuna in calling them so. The term *Māheśvara* is a name common for the followers of all these sects.

† यथा[1] कापालिकाः[2] कालामुखाः पाशुपतास्तथा[3] ।
शैवास्तत्र च कापालं मतमे[4]वं प्रचक्षते ॥

[1] $M_6$—तथा
[2] My—कापिलकाः
[3] $M_2$, My—°स्मृताः
[4] B—कापालमतम्°

† See M. R. Sakhare, *Liṅgadhāraṇacandrikā*, pp. 331-332 :

"In the Vāyupurāṇa (ch. 23) and the Liṅgapurāṇa (ch. 24) it is said that Maheśvara told Brahmā that when Vāsudeva is born, he would incarnate himself as a Brahmacārin by the name of Lakulin and that Lakulin would have four pupils of names Kushika, Garga, Mitra and Kaurushya, these would be Pāśupatas. The refutation of the Pāśupata system is found in the Brahmasūtra: "patyurasāmañjasyāt" (II. ii. 37).

From all this it appears that the Pāśupata school was founded by Lakulīśa (the holder of *lakula* or *lakuṭa*—a club or staff). This Lakulīśa (also called Nakulīśa) is the last of the 28 incarnations of Śiva as mentioned by the Purāṇas. This has been confirmed by inscriptions too."

The Kālāmukhas and Kāpālikas were two different sects of the Māheśvaras. Dr. Bhandarkar (in his *Śaivism and Vaiṣṇavism*, etc., p. 183), identifies the Kālāmukhas with Mahāvratadharas on the authority of Śivapurāṇa but M. R. Sakhare, on the evidence of a Jain author, states that the Kāpālikas but not the Kālāmukhas were the same as Mahāvratadharas (pp. 344 f.).

The Kālāmukhas, according to T. A. Gopinatha Rao (*Elements of Hindu Iconography*, Vol. II, p. 26), were so called as they marked their forehead with black streak and were said to be the offspring of "nara" and "rākṣasa" parents.

"The Kāpālika system is very ancient since it is mentioned in the Maitrī Upaniṣad ('atha ye cānye ha vṛthā kaṣāyakuṇḍalinaḥ kāpālinaḥ')" [*Liṅgadhāraṇacandrikā*, p. 344].

"The allegorical drama, *Prabodhacandrodaya* of Kṛṣṇamiśra (III. 12, 13) introduces a Kāpālika, who describes himself and his practices as follows :

नरास्थिमालाकृतचारुभूषणः
    स्मशानवासी नृकपालभोजनः ।
पश्यामि योगाञ्जनशुद्धचक्षुषा
    जगन्मिथो भिन्नमभिन्नमीश्वरात् ॥
मस्तिष्कान्त्रवसाभिपूरितमहामांसाहुतीः जुह्वतां
    वह्नौ ब्रह्मकपालकल्पितसुरापानेन नः पारणा ।
सद्यःकृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलैः
    अर्च्यो नः पुरुषोपहारबलिभिः देवो महाभैरवः ॥"

[*Ibid.* p. 345]



[ कापालमतप्रतिपादनम् ]

मुद्रिकाषट्कविज्ञानात्, पुनस्तस्यैव धारणात् ।
अपवर्गफलप्राप्तिः, न ब्रह्मावगमादिति ॥

तथाऽऽहुः[1]—

* "मुद्रिकाषट्कतत्त्वज्ञः[2] परमुद्राविशारदः[3] ।
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ॥"

तथा—

* "कर्णिका रुचकं[4] चैव कुण्डलं च शिखामणिम्[5] ।
भस्म यज्ञोपवीतं[6] च मुद्रा[7]षट्कं प्रचक्षते ॥
* कपालमथ खट्वाङ्गमुपमुद्रे प्रकीर्तिते[8] ।
आभि[9]र्मुद्रितदेहस्तु न भूय इह जायते ॥"

[1] B omits तथाऽऽहुः
[2] $M_2$, $M_3$—तत्त्वज्ञाः
[3] $M_2$—°विशारदाः
[4] $M_2$, My—कर्णिकारुचके
[5] My—शिखामणिः
[6] $M_3$—भस्मयज्ञोपवीते
[7] $M_3$ adds च, to the detriment of metre.
[8] $M_1$—प्रवर्तिते; $M_6$—प्रकीर्त्यते; My—प्रवर्तते
[9] $M_2$ & My—त्रिभिः

Also *vide Indian Philosophy* by Dr. S. Radhakrishnan, Vol. I, p. 488 :

"The Rudra of the Ṛgveda (I. 114.8). the personification of the destructive powers of nature, becomes in the Śatarudrīya, the Lord of Cattle, '*paśūnām patiḥ*'. In the Brāhmaṇas, Śiva becomes the distinctive term for Rudra. The Pāśupata system continues the tradition of Rudra-Śiva. In the Mahābhārata, we find a theology named Pāśupata centring round Śiva [Śāntiparvan, ch. 349, 5, 64]. We have an account of this system in Sarvadarśanasaṅgraha and Advaitānanda's Brahmavidyābharaṇa. Śaṅkara criticises this theology in his commentary (II. ii. 37-39)."

For a history and philosophy of these different schools of Śaivism from inscriptional data, see V. S. Pathak, *History of Śaiva Cults in Northern India from Inscriptions*, pp. 4-28.

* Passages to be identified.

[ तस्य अवैदिकत्वनिरूपणम् ]

न चेदृशमुद्रिकाषट्कपरिज्ञान,तद्धारण,निन्दित[1]भगासनस्थ-देव[2]ध्यानस्य अपवर्गसाधनत्वं श्रुतयो मृष्यन्ति । ता हि ऐहिकामुष्मिकसकलवि[3]षयाभिलाषविमुखस्याखिलजगत्कारणवासुदेवात्मभावनैकलभ्यं मोक्षमाचक्षते—* 'तमेव[4] विदित्वाऽतिमृत्युमेति, नान्यः पन्था अयनाय विद्यते' इत्याद्याः ।

[ कालामुखमतप्रतिपादनदूषणे ]

एवं कालामुखा अपि समस्तशास्त्रप्रतिषिद्धकपालपात्र[5]-भोजनशवभस्मस्नानतत्प्राशन[6]लगुड[7]धारणसुराकुम्भस्थापनतत्स्थदेवतार्चनादेरेव दृष्टादृष्टाभीष्टसिद्धिमभिदधानाः श्रुतिबहिष्कृता एव ।

[ पाशुपतशैवमतनिरासोक्तिः ]

यदपि पाशुपत[8]शैवाभ्यां विरुद्धाविरुद्धसंमुग्धं[9] किञ्चिदभिहितं, तदपि श्रुतिबहिष्कृतमेव ।

[ पाशुपतमतप्रतिपादनम् ]

तत्रैषा पाशुपतप्रक्रिया—

† जीवाः पशव उच्यन्ते तेषामधिपतिश्शिवः ।

---

1 $M_2$, My, B—°निमित्त°
2 P, PM, T, $M_3$ to $M_7$, B, $V_1$, A—°देह°
3 $M_3$ omits वि
4 $M_1$—°एवम्
5 A, B—°मात्र°
6 $M_3$—°तत्प्राशन°; $M_3$—°तत्प्रकाशनम्°
7 $M_2$, $M_4$, $M_6$, $M_7$, B—°लकुट°
8 $M_4$—°पाशुपते°
9 P, T, $M_1$, $V_1$,—°समसुग्धम्°
$M_2$, My—°विरुद्धसंमुग्धम्

---

* *Taittirīya Āraṇyaka* III. xiii. 1; also *Śvetāśvatara* VI. 15.

† *Vide Pāśupatasūtra* with Kauṇḍinya's commentary, I. 1, p. 5 :
"पश्यनात् पाशनाच्च पशवः । तत्र पाशा नाम कार्यकारणाख्याः कलाः ।"

Also see *ibid* :
"सांख्ययोगेन ये मुक्ताः, सांख्ययोगेश्वराश्च ये ।
ब्रह्मादयस्तिर्यगन्ताः सर्वे ते पशवस्स्मृताः ॥"



स तेषामुपकाराय[1] §पञ्चाध्यायीमचीक्लृपत् ॥
तत्र पञ्चपदार्थास्तु व्याख्याताः कारणादयः[2] ।
† कारणं कार्यं विधिर्योगो दुःखान्त इति ।
उपादानं निमित्तं च व्याख्यातं कारणं द्विधा ।
निमित्तकारणं रुद्रः, तत्कला[3] कारणान्तरम् ॥
मह्यन्तं महदादि 'कार्य'मुदितं, तद्वत् 'विधि[4]'र्गीयते

---

1 PM—°अधिकाराय
2 $M_6$—करणादयः
3 $M_2$, $M_3$—तत्काला
4 $M_6$—तत्तद्विधिः

---

§ This *Pañcādhyāyī* is, in all probability, same as the *Pāśupatasūtra*, referred to above. This work is in five chapters, dealing with the five characteristics of this cult, *viz.*, *Kāraṇa*, *Kārya*, *Vidhi*, *Yoga* and *Duḥkhānta*, which also go by the name *Pañcapadārthas* or *Pañcārthas*.

† *Cf.* Kauṇḍinya's commentary on the *Pāśupatasūtra* : I–i, p. 6 :
"एवं सदुःखान्तं कार्यं कारणं योगो विधिरिति पञ्चैव पदार्थाः समासत उद्दिष्टाः ।"

*Vide Indian Philosophy*, Vol. I, p. 489 :

"The five categories are :

1 *Kāraṇa* or Cause : The Cause is the Lord, the Pati, the Eternal ruler, who creates, maintains and destroys the whole existence.

2 *Kārya* or Effect : It is what is dependent on the cause. It includes knowledge or *vidyā*, organs or *kalā* and individual souls or *paśu*. All knowledge and existence, the five elements and the five qualities, the five senses and the five organs of actions and the three internal organs of intelligence, egoism and mind are dependent on the Lord.

3 *Yoga* or Discipline : It is the mental process by which the individual soul gains God.

4 *Vidhi* or Rules : It relates to the practices that make for righteousness.

5 *Duḥkhānta* or the end of misery : It is final deliverance or destruction of misery and obtaining an elevation of spirit, with full powers of Knowledge and Action."

For a more detailed explanation of these categories, see *Liṅgadhāraṇacandrikā*, pp. 351–57.

*गूढाचारमुख$स्मशान‡भसितस्नानावसानः, परः ।
'योगो' धारणमुच्यते ¶हृदि धियामोङ्कारपूर्वं, तथा
§'दुःखान्तो' हि मतो[1]ऽपवर्ग इति ते पञ्चापि संकीर्तिताः ॥

आत्यन्तिकी[2] दुःखनिवृत्तिः 'दुःखान्त'शब्देनोक्ता । तामेव निश्शेषवैशेषिकात्मगुणोच्छेदलक्षणां मुक्तिं मन्यन्ते । इयमेव च[3] ईश्वरकल्पना शैवानामन्येषां च ।

[ शैवादिमतानां श्रुतिविरुद्धत्वनिरूपणम् ]

सेयं सर्वा श्रुतिविरुद्धा कल्पना[4], यतः** ।
जगन्निमित्तोपादानं परं ब्रह्म[5] श्रुतौ श्रुतम् ॥
महानन्दात्मको मोक्षः तत्र तत्रासकृच्छ्रुतः ।
परस्पर[6]विरोधेन[7] व्याहतैषां प्रमाणता ॥
त्रयीदण्डप्रतिक्षेपं किञ्चिन्नैव[8] प्रतीक्षते ।
किञ्च, शैवादयो वेदसिद्धवर्णाश्रमाद्बहिः ॥
कल्पयन्त्याश्रमादीनि, ततोऽपि श्रुतिबाह्यता ।

---

[1] $M_2$, $M_4$, B—°अभिमतः°
[2] $M_4$, B—आन्तिकी
[3] $M_1$, $M_2$, $M_4$, $M_5$, $M_7$, My, A, B omit च
[4] $M_1$—श्रुतिविरुद्धकल्पना
[5] $M_5$—परब्रह्म
[6] $M_4$—परस्परम्°
[7] $M_2$ adds न
[8] $M_4$—°नैवम्

---

* *Cf. Pāśupatasūtra* : IV. 2 : 'गूढव्रतः'; IV. 3 : 'गूढवित्रपाणिः'; IV. 4 : 'सर्वाणि द्वाराणि पिधाय'; IV. 5 : 'बुध्वा'।

$ *Ibid.* V. 30 : 'स्मशानवासी'

‡ *Ibid.* I : 2, 3, 4 : 'भस्मना त्रिषवणं स्नायीत', 'भस्मनि शयीत', 'अनुस्नानम्'।

¶ *Ibid.* V. 23, 24 & 25 :
'अतो योगः प्रवर्तते', 'ओङ्कारमभिध्यायीत', 'हृदि कुर्वीत धारणाम्'।

§ *Ibid.* V. 40 :
'अप्रमादी गच्छेत् दुःखानामन्तं ईशप्रसादात्'।

** This line is wanting in two syllables. Or, this may be taken as a prose passage.



यदाऽऽहुः—

*"दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात् ।
कापालं व्रतमा[1]स्थाय यतिर्भवति मानवः" ॥ इति[2] ।

[ एतादृशावैदिकतन्त्राणां रुद्रप्रणीततया व्यामोहकत्वसमर्थनम् ]

न च वाच्यमप्रमाणभूतमि[3]यन्तं ग्रन्थराशिं कथं प्रत्ययिततरो[4] रुद्रः प्रणय[5]तीति । न च समाननाम[6]निर्मातृस्मरणनिबन्धनमिति[7] युक्तम्, अतिप्रसंगादिति । यतः—

†नामैकत्वकृतभ्रान्तिकल्पनाऽप्युपपद्यते ।
वेदबाधात्, न चान्यत्र तावताऽतिप्रसज्यते ॥
प्रमादोऽपि न चात्यन्तं रुद्रादिषु न सम्भवी[8] ।

यद्वा रुद्रस्य मोहशास्त्रप्रणेतृतयाऽवगतत्वात्[9] व्यामोहयितुमपी[10]दृशशास्त्रप्रणयनमु[11]पपद्यत इति, नावश्यं प्रमाद एवाश्रयितव्यः ।

तथा च वाराहे—

---

[1] $M_2$—मतम्°
[2] PM omits इति
[3] $M_1$ reads °न प्रमाणभूतं, for °अप्रमाणभूतम्
[4] $M_4$—°तमो
[5] A—प्राणयति°
[6] $M_1$ omits नाम; $M_4$ reads असमाननाम°
[7] $M_3$ reads °स्मरणबन्धनमिति; B, reads °स्मरणमनिबन्धनमिति
[8] T, $M_1$, $M_2$—न सम्भवि
[9] $M_3$ adds वा
[10] P, PM—व्यामोहयितुमेव हि
[11] $M_3$,$M_6$—°प्रत्ययनम्°

---

* To be identified.

Every school of thought stresses the importance of its own *dīkṣā*-ceremony. See *Śaivasiddhānta*, p. 47.

† See the verse "vāsudevābhidhānena" etc. on p. 52 above for the *pūrvapakṣa*-view.

*Cf. Tantraśuddha*, p. 17 :

"यतः केनचिदर्वाक्तनेन क्षेत्रज्ञेन महेश्वरसमाननाम्ना त्रयीमार्गबहिष्कृतेयं प्रक्रिया विरचिता । तन्नामसामान्येन केचिद्भ्रान्त्या महेश्वरनामकोपदिष्टमार्गमवलम्बितवन्तः ।"

* "त्वं च[1] रुद्र! महाबाहो! मोहशास्त्राणि कारय ।

† कुहकादीन्द्रजालानि विरुद्धाचरणानि[2] च ॥

§ दर्शयित्वाऽल्पमायासं फलं शीघ्रं[3] प्रदर्शय ।

दर्शयित्वा जनं सर्वं मोहयाऽऽशु महेश्वर ॥" इति ।

तथा, तत्रैव[4] भगवान् रुद्रः प्रस्तुतशैवाद्यागमानां स्वयमेव वेदबाह्यत्वं, वेदमार्गापभ्रष्ट[5]जनाधिकारित्वं, तद्व्यामोहैक[6]प्रयोजनतां[7] च दर्शयति—

"ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव[8] च ॥

‡ नय[9]सिद्धान्तमार्गेण मया शास्त्रं[10] प्रदर्शितम् ॥

$ तस्मादारभ्य कालात्तु मत्प्रणीतेषु सत्तमाः[11] ।

शास्त्रेष्वभिरतो लोको न वेदान् बहुमन्यते ॥

× तथा पाशुपतादीनि प्रवर्तन्ते कलौ युगे ॥

तथा च भगवत्परिवारत्व[12]व्यतिरेकेण स्वप्रधानपूजां पाशुपतादितन्त्रसिद्धां वेदबाह्यां दर्शयति ।

---

1 P, PM, T, $M_3$, $M_5$, $M_6$, $V_1$, & A read हि

2 $M_3$—°चरणानि

3 $M_3$, $M_6$—दीर्घम्

4 $M_3$—अत्रैव

5 $M_1$—°अपसृष्ट°

6 My—तद्व्यामोहकैक°

7 $M_1$, $M_2$, My, B—°प्रयोजनत्वम्

8 $M_3$—मोहत्वमेव

9 My—न च°

10 $M_2$, My—मायाशास्त्रम्

11 $M_2$, My—असत्तमाः

12 $M_2$, My omit त्व

---

* Ch. 70, śl. 36b.

† To be traced out.

§ The ptd. text of the *purāṇa* has the following line in the place of this verse :

"अल्पायासं दर्शयित्वा मोहयाशु महेश्वर ।" ( ch. 70, śl. 37a )

‡ The ptd. edn. has the following reading :

"नयसिद्धान्तसंज्ञाभिः मया शास्त्रं तु दर्शितम् ।" ( ch. 70, śl. 41b-42a )

$ Ch. 70. śl. 38b-39a. Variant for the second line :

"शास्त्रेष्वभिरतो लोके बाहुल्येन भवेदतः ।"

× *Ibid.* śl. 43a. Variant : "तदा पाशुपतं शास्त्रं जायते वेदसंज्ञितम् ।"



* "तद्वेदबाह्यं कर्मोक्तं मामुद्दिश्योपसेव्यते ।

तद्वै पाशुपतं नाम कनिष्ठं मोहनं नृणाम् ॥

† मां विष्णुव्यतिरेकेण पूजयन्ति नराधमाः ।"

इत्यादिवाक्याजातानि[1] न लिख्यन्तेऽतिगौरवात् ॥

व्यक्तं च वेदबाह्यत्वमेतच्छास्त्रानुगामिनाम् ।

यथा[2] तत्रैव—

§ "शशाप तान् जटा[3]भस्मकपालव्रतधारिणः ।

भविष्यथ[4] त्रयीबाह्या वेदकर्मबहिष्कृताः ॥

$ कलौ तद्रूपिणस्सर्वे जटालगुड[5]धारिणः ।

स्वच्छन्दव्रत[6]वेषाश्च मिथ्यालिङ्ग[7]धरास्तथा ॥

‡ ब्रह्मशापाग्निनिर्दग्धा रुद्रभक्ता जटाधराः ।" इति ।

प्रसिद्धं चैतत्[8] शैवागमेषु[9]—

‡ "रुद्राक्षं कङ्कणं[10] हस्ते जटा चैका च मस्तके ।

कपालं भस्मना स्नानम्"—इत्यादि ।

तथा चैतेषामा[11]दित्यपुराणेऽपि भगवत्त्यागेन समं वेदत्यागं कथयन्ति[12]—

---

1 $M_3$—°जालानि

2 $M_2$, My—तथा

3 A, $M_5$, $V_1$ read तज्जटा°

4 $M_3$—भविष्यत

5 $M_2$, $M_4$, $M_6$, $M_7$, B–°लकुट°; $M_1$–°मकुट°

6 $M_4$, B—°मत°

7 B—°लिङ्ग्य°

8 $M_4$—चैव तत्

9 $M_3$—शिवागमेषु

10 My—रुद्राक्षकङ्कणम्

11 $M_4$, B—एषाम्°

12 All but $M_6$—कथयति

---

* To be identified.

† Ch. 70. śl. 40b. Variant : "मां विष्णोः व्यतिरिक्तं ये ब्रह्मणश्च द्विजोत्तम ।" The next line ( 41a ) of the *purāṇa* may also be noted : "भजन्ते पापकर्माणस्ते यान्ति नरकं नराः ।"

§ Ch. 71. śl. 40b-41a. Variant for the first line : "..जटाभस्ममिथ्याव्रतधरांस्तदा ।"

$ Ch. 71. śl. 51. Variant :

"कलौ स्वद्रूपिणस्सर्वे जटामुकुटधारिणः ।

स्वेच्छया प्रेतवेषाश्च मिथ्यालिङ्गधराः प्रभो ॥"

‡ Passages to be identified.

‡ " अन्ये भस्मजटोपेता यथोक्ता गौतमात्[1]पुरा ।
शापात् संत्याजिता वेदं,[2] देवं नारायणं तथा ॥ " इति ।
किश्चैते वासुदेवस्य मन्दा निन्दां वितन्वते ।
ते च पाषण्डिनो ज्ञेयाः, यथा लैङ्गे[3] समीरितम् ॥
‡ " ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम् ।
ते वै पाषण्डिनो ज्ञेया वेदकर्मबहिष्कृताः ॥ " इति ।

ततश्च[4]—

एत एव च ते येषां वाङ्मात्रेणापि नार्चनम्[5] ।
* " पाषण्डिनो विकर्मस्थान् " इत्यादिस्मृतिषूदितम्[6] ॥
§ " या वेदबाह्या " इत्येतदपि चेदृशगोचरम् ।
तस्मान्न वेदमूलत्वं, नाऽपि प्रत्यक्षमूलता ॥
तन्त्रान्तराणां युक्तेति कल्प्यते कारणान्तरम् ॥
ननु मूलान्तरापेक्षा[7] यदि स्यादस्तु दूषणम् ।
स्वतःप्रमाणं विज्ञानं भवतां ननु दर्शने ॥
सत्यम्--तदेव[8] विज्ञान[9]प्रामाण्यमपनीयते[10] ।
बाधकारणदोषाभ्यां, तावपि[11] द्वाविह स्फुटौ[12] ॥

[1] $M_4$, B—यथोक्तगौतमात्°
[2] $M_6$—वेदान्
[3] $M_1$, $M_3$—लैङ्ग्ये
[4] $M_3$ omits ततश्च
[5] $M_3$ reads यातनम्
[6] A, $M_2$, $M_3$—°दूषितम्
[7] $M_4$, B, read वान्तरापेक्षा for मूलान्तरापेक्षा
[8] $M_6$—तवेदम्
[9] $M_5$—विज्ञाने
[10] $M_1$—°उपनीयते; $M_3$—°अपि नीयते $M_6$—°अपि हीयते
[11] $M_3$, $M_6$—तवापि
[12] $M_3$—स्फुटम्

‡ Passages to be identified.

* *Cf. Manusmṛti* IV-30 :

'पाषण्डिनो विकर्मस्थान् बैडालव्रतिकान् शठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥'

§ *Ibid*. XII-95 :

'या वेदबाह्यास्स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि तास्स्मृताः ॥'



एवं श्रुतिविरुद्धस्य स्फुटमूलान्तरस्य यत् ।
पञ्चरात्रेण साधर्म्यं तन्त्रत्वेनाभिधित्सितम् ॥
क्रियात्वेन तु[1] साधर्म्यं ब्रह्महत्याश्वमेधयोः ।
श्रुतिप्रत्यक्षयोस्तत्र यतो मूलत्वनिश्चयः ॥
ननु च श्रुतिमूलत्वे वेदादेवार्थसिद्धितः ।
तत्प्रणेतृस्वतन्त्रत्वकल्पना नेत्यचूचुदम्[2] ॥
नैवं न कल्प्यते पुंसि, स्वातन्त्र्यं श्रूयते हि तत् ।
* " तस्याध्यक्षमिदं सर्वम् ", † " भीषास्मा[3]दि " दमादिषु[4] ॥

[ पञ्चरात्रस्य वेदमूलत्वाभावत्वोपक्षेपः ]

ननु[5] वेदमूला एव चेदेताः पञ्च[6]रात्रस्मृतयः, किं तर्हि तदर्थस्मरणवत् तन्मूल[7]भूत[8]वेदवाक्यस्मरणं नानुवर्तते पाञ्चरात्रिकाणाम्? न चार्थस्मरणस्य प्रयोजनवत्वात् §तस्य च[9] विफलत्वात् तदनादरणीयमिति युक्तम् । ‡न हि यतः प्रामाण्यं, तदेव विस्मर्तुं युक्तम् ।

×अथ वि[10]स्मरणोपपत्तये प्रलीननित्यानुमेयशाखामूलता

[1] $M_1$, $M_7$—क्रियात्वे ननु
[2] $M_1$—नेत्यचूचुदत्
[3] $M_4$, B—भीषणात्°
[4] $M_3$ reads इति मारुष for इदमादिषु
[5] $M_2$ omits ननु
[6] $M_3$—पाञ्च°
[7] $M_2$, $M_7$, My—°स्मरणवन्मूल°
[8] $M_3$—°मूलहेतु°
[9] P, PM, T, $M_1$, $M_3$ to $M_7$, A, B & $V_1$, omit च
[10] $M_2$ omits वि

* To be traced out.

† *Taittirīya Āraṇyaka* : VIII. 8. 1a; also *Taittirīyopaniṣat*: II. 8. 1a.

§ 'तस्य' मूलभूतवेदवाक्यस्मरणस्येत्यर्थः ।

‡ *Cf. Tantravārtika* under I. iii. 1, p. 73 :

'न हि यत्कृतं प्रामाण्यं, तदेव विस्मर्तुं युज्यते ।'

× *Cf. ibid : I-iii-1, p. 73* :

" यदि तु प्रलीनशाखामूलता कल्प्येत, ततस्सर्वासां बुद्धादिस्मृतीनामपि, तद्द्वारं प्रामाण्यं प्रसज्यते । यस्यैव च यदभिप्रेतं स एव तत् प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात् । अथ विद्यमानशाखागता एवैतेऽर्थाः, तथापि सत्वादय इव सर्वे पुरुषास्तत एवोपलप्स्यन्ते । युक्ततरा च स्वाध्यायाध्ययनविधेः साक्षाद्वेदादेव प्रतीतिरिति स्मृतिप्रणयनवैयर्थ्यं स्यात् " ।

आश्रीयते, तदा[1] यदेव येन प्रमाणतया परिगृहीतं स[2] तत् प्रलीन-शाखामस्तके निक्षिप्य प्रमाणी[3]कुर्यात्। नित्यानुमेयप्रलीनशाखयोस्तु स्वरूपसिद्धिरेव दुर्लभा। अथ विद्यमानशाखामूला एव[4] ताः[5] स्मृतयः; तदा तत्प्र[6]णेतृवदन्येऽपि तत एवोपलभेरन् इति ग्रन्थ-प्रणयन[7]प्रयास[8]वैयर्थ्यम्[9]।

[ पञ्चरात्रस्य वेदान्तसारभूतत्वकथनेन तस्य वैदिकत्वसमर्थनम् ]

अत्रोच्यते—स खलु भगवानमोघसहजसंवेदनसाक्षात्कृत-दखिलवेदराशिः विप्रकीर्णविविधविध्यर्थवादमन्त्रात्मकानेकशाखाध्य-यनधारणादिषु[10] अधीरधियो[11] भक्तानवलोक्य, तदनुकम्पया लघुनोपायेन तदर्थं संक्षिप्योपदिदेशेति न[12] किञ्चिदनुपपन्नम्।

यथाऽऽहुः—

* 'वेदान्तेषु यथासारं संगृह्य भगवान् हरिः।
भक्तानुकम्पया विद्वान् संचिक्षेप यथासुखम्'॥ इति।

एते च मन्वादिसमस्त[13]स्मरण[14]साधारणाः[15] पर्यनुयोगाः †तन्त्रटीकाकृतपरिश्रमाणामनायासपरिहार्या इति नेह प्रपञ्च्यते।

[ पञ्चरात्रे वेदनिन्दादर्शनात् तदवैदिकमित्याक्षेपस्य खण्डनम् ]

‡ ननु चेदं[16] वेदमूलत्वं पञ्चरात्रतन्त्राणामनुपपन्नम्। वेद-

---

1 $M_3$ reads यदा
2 $M_1$ omits सः
3 $M_3$—प्रमाणम्°
4 My omits एव and adds हि
5 $M_3$ omits ताः; $M_1$, $M_2$, $M_7$ & B read एताः, for एव ताः
6 My reads तदेतत् for तत्
7 My omits न
8 $M_3$ has प्रसाद for प्रयास
9 $M_2$ adds इति
10 $M_1$, $M_2$, $M_4$, $M_7$, My, °B—शाखाध्ययनादिषु
11 $M_6$—अवधीरितधियः
12 $M_3$ omits न
13 $M_2$, $M_3$, & My omit समस्त
14 $M_2$—°संस्मरण°
15 $M_4$, B—°स्मरणसंसारणाः
16 $M_3$ omits चेदम्

---

* *Mahābhārata*, *śāntiparvan*, ch. 348. śl. 64.
† This is another name for *Tantravārtika* of Kumārila Bhaṭṭa.
‡ See p. 17 above, for the *pūrvapakṣa*-view.



निन्दादर्शनात्। उक्तं हि[1] 'चतुर्षु वेदेषु पुरुषार्थमलभमानः शाण्डिल्य इदं शास्त्रमधीतवान्' इति §।

[ निन्दाग्रन्थतात्पर्यविचारः ]

* अनवगतवचनव्यक्तेरयं पर्यनुयोगः। † 'न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते; अपि तु निन्दितादि[2]तरत् प्रशंसितुम्'। यथैतरेयकब्राह्मणे ‡'प्रातःप्रातरनृतं ते वदन्ति[3]', इत्यनुदितहोमनिन्दा उदितहोम[4]प्रशंसार्थेति गम्यते; यथा मानवे—

---

1 $M_2$ has च for हि; My omits हि
2 PM reads निन्द्यात्
3 $M_3$—विवदन्ति
4 A—इतरहोम°

---

§ *Cf.* *Aniruddha Samhitā* Ch. I:
"भृगुं वेदविदां श्रेष्ठमात्मध्यानपरायणम्॥ (9 b)
पार्श्वस्था मुनयस्सर्वे प्रणिपत्य जगद्गुरुम्।
ऊचुस्तं मुनयः सर्वे एतद्वाक्यमतन्द्रिताः॥ (12)
वेदास्सर्वे समासेन सांगोपांगास्सविस्तराः।
त्वत्तः कमलपत्राक्ष श्रुताः पूर्वं दयापर॥ (13)
श्रेयोमार्गं न पश्यामः, तद्वदस्व महामुने। (14 a)

* *Cf.* *Śrībhāṣya* under II-ii-42, p. 831:

"यश्चैष केषांचिदुद्घोषः 'सांगेषु वेदेषु निष्ठामलभमानः शांडिल्यः पञ्चरात्रमधीतवानिति, सांगेषु वेदेषु पुरुषार्थनिष्ठा न लब्धेति वचनात् वेदविरुद्धं तन्त्रमिति', सोऽप्यनाघ्रातवेदवचसामनाकलिततदुपबृंहणन्यायकलापानां जडामात्रविजृम्भितः। यथा 'प्रातःप्रातरनृतं ते वदन्ति पुरोदयात् जुह्वति येऽग्निहोत्रम्' इति, अनुदितहोमनिन्दा उदितहोमप्रशंसार्थेत्युक्तं, यथा च भूमविद्याप्रक्रमे नारदेन 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमम्' इत्यारभ्य, सर्वं विद्यास्थानमभिधाय, 'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्' इति भूमविद्याव्यतिरिक्तासु सर्वासु विद्यास्वात्मवेदनालाभवचनं वक्ष्यमाणभूमविद्याप्रशंसार्थं कृतम्, अथवाऽस्य नारदस्य सांगेषु वेदेषु यत् परतत्त्वं प्रतिपाद्यते, तदलाभनिमित्तोऽयं वादः, एवमेव शाण्डिल्यस्येति पश्चात् वेदान्तवेद्यवासुदेवाख्यपरब्रह्मतत्त्वाभिधानादवगम्यते। तथा वेदार्थस्य दुर्ज्ञानतया सुखावबोधार्थशास्त्रारम्भः **परमसंहितायामुच्यते**।

'अधीता भगवन्! वेदाः सांगोपांगाः सविस्तराः।
श्रुतानि च मयांगानि वाकोवाक्ययुतानि च॥
न चैतेषु समस्तेषु संशयेन विना क्वचित्।
श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति॥' इति।" [I. 3, 4]

† *Vide Śābarabhāṣya* under II-iv-20, p. 139, lines 27 & 28.
‡ *Aitareya Brāhmaṇa*: V-31-6.

*Cf.* also *Taittirīya Brāhmaṇa* II. 1. 2. 7: "यदनुदिते सूर्ये प्रातर्जुहुयात् उभयमेवाग्नेयं स्यादुदिते सूर्ये प्रातर्जुहोति।"

* "ऋग्वेदो देवदैवत्यो[1] यजुर्वेदस्तु मानुषः ।
सामवेदस्तु पित्र्यः स्यात्, तस्मात्तस्याशुचिर्ध्वनिः" ॥

इति सामवेदनिन्दा इतरवेद[2]प्रशंसार्था ; यथा वा भारते[3] —

§ "चत्वार एकतो वेदाः[4], भारतं चैकमेकतः ।
समागतैस्सुरर्षिभिः[5] तुलयाऽऽरोपितं पुरा ॥
महत्वे च गुरुत्वे च ध्रियमाणं[6] यतोऽधिकम् ।
महत्वाच्च गुरुत्वाच्च महाभारतमुच्यते" ॥

इति महाभारतप्रशंसार्थेति गृह्यते[7], न वेदनिन्देति; एवं पञ्चरात्रप्रशंसेति गम्यते[8]।

अथानुदितहोमादेरन्यत्र स्तुतिदर्शनात् ।
अतत्परत्वं निन्दायाः, तथात्रापि भविष्यति ॥
वेदप्रशंसा बहुशः पञ्चरात्रेऽपि दृश्यते[9] ।
‡ "न हि तेभ्यः परं किञ्चित् वाङ्मयं कमलासन ।
वेदान्तैरिदमेवोक्तं तत्त्वज्ञानोपपादकैः ॥" इत्यादौ ।

अपि च 'चतुर्षु वेदेष्वि'[10]ति नायमर्थः—'वेदेषु[11] पुरुषार्थो नास्ती'ति; किन्तु 'यस्तेषु पुरुषार्थः, तमलभमानः' इति ।

ननु 'पुरुषार्थमलभमान' इत्यन्वयः, न 'वेदेषु पुरुषार्थम्' इति[12] ।

---

[1] $M_2$, $M_3$, $M_6$—देवदेवत्यो
[2] $M_2$ omits वेद
[3] $M_2$ & My read यथा वाराहे
[4] A—भागा:
[5] P, PM—समागतैस्तु ऋषिभिः
[6] B—क्रियमाणम्
[7] $M_1$, $M_2$, $M_4$, $M_7$, My, B,—°भाव्यते
[8] $M_3$, $M_6$—इष्यते
[9] $M_3$ omits this and the two preceding lines but has them after न चान्यः कल्पः, below. A, $M_3$, $M_5$, $V_1$ have the following line *instead* : 'दृश्यते पंचरात्रेऽपि बहुशो वेदप्रशंसा' ; $M_2$, $M_4$, My & B, have the following line *in addition* : 'दृश्यते पञ्चरात्रेऽपि बहुशो वेदप्रशंसा' ।
[10] PM omits इति
[11] $M_3$ reads : अपि च चतुर्षु वेदेष्वयमर्थः वेदान्तेषु
[12] PM—पुरुषार्थ इति

---

* *Manusmṛti* IV. 124.
§ *Ādiparvan* I. 208-209.
‡ To be identified.



मैवम्—व्यावर्त्याभावात्[1] । न हि वेदेष्वेवायं पुरुषार्थं न लभते[2] । अतो वेदेषु यः पुरुषार्थः, तमलभमानः[3], तदभिलाषी पञ्चरात्रशास्त्रमधीतवानिति पञ्चरात्रश्रुत्योः ऐकार्थ्यमेव[4] प्रतीयते ।

[ पाञ्चरात्रीयदीक्षासंस्कारविचारः ]

* यत्पुनरुक्तम्—उपनयनादि[5]संस्कृतानां भगवदाराधनार्थतया[6] दीक्षालक्षणसंस्कारविधानादवैदिकत्वमिति, तदयुक्तम्[7] । न हि उपनयनादिसंस्कृतानां ज्योतिष्टोमादिकर्माङ्गतया दीक्षादिसंस्कारविधायकं §'आग्नावैष्णवम्' इत्यादिवाक्यम[8]वैदिकं[9] भवति । अथ वैदिक[10]संस्कारात्[11] संस्कारान्तरविधानं[12] हेतुः[13], त[14]दनुपपन्नम् । सिद्धे हि पञ्चरात्रशास्त्रस्यावैदिकत्वे[15] तस्य संस्कारान्तरत्व[16]सिद्धिः; तत्सिद्धौ च तस्यावैदिकत्वसिद्धिरित्यन्योन्याश्रयणात् ।

किञ्च, समस्तवैदिकसंस्कारेभ्यः संस्कारान्तरत्वं वा हेतुः, उत कतिपयेभ्यस्संस्कारेभ्यः ? न तावदनन्तरः कल्पः; उपनयनादिसंस्कारस्यापि चौलादिसंस्कारात् संस्कारान्तरत्वेन अवैदिकत्वप्रसङ्गात् ।

---

[1] $M_1$—व्यावृत्त्यभावात्
[2] P, PM—पुरुषार्थो न लभ्यते
T, A, $M_5$, $V_1$—पुरुषार्थो न लभते
[3] $M_1$ reads पुरुषार्थमलभमानः ( no तम् )
[4] $M_2$ & My—ऐकान्त्यमेव
[5] My—उपनयादि°
[6] $M_1$ & $M_7$ omit तया
[7] $M_4$ & B, omit तदयुक्तम्; $M_3$ adds इति
[8] PM—इत्यादिकम्° ( no वाक्यम् )
[9] $M_2$ & $M_3$—°वैदिकम्
[10] B—अवैदिक°
[11] $M_2$—°विकारात्
[12] $M_6$ adds वा
[13] PM—°विधानहेतुः
[14] $M_3$ has a gap from तदनुपपन्नम् upto वा हेतुः below.
[15] B—°वैदिकत्वे; $M_2$ adds तु
[16] $M_6$—संस्कारान्तरविधायकत्व°

---

* See 18 above, for the opponent's argument.

§ *Cf.* 'आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपेद् दीक्षिष्यमाणः', quoted by Śabara under XII. 1-25, p. 319.

Also *cf. Aitareya Brāhmaṇa*. I. 1 :

'आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीयमेकादशकपालम्' ।

न चान्यः[1] कल्पः[2], उक्तदोषानतिवृत्तेः। नहि उपनयनं समस्तवैदिकसंस्कारेभ्यः[3] संस्कारान्तरम्। असिद्धश्च[4] समस्तवैदिकसंस्कारव्यतिरेकः, पञ्चरात्रशास्त्रस्यापि वैदिकत्वादित्युक्तमेव।

[ विद्यास्थानेष्वपरिगणनविचारः ]

* यदपि धर्मप्रमाणत्वाभिमत[5]चतुर्दशविद्यास्थानेषु अ[6]परिगणितत्वात् पाशुपतादितन्त्रवत् त्रयी[7]बाह्यत्वमिति, तदपि द्वैपायनवाल्मीकिप्रणीतभारतरामायणादिग्रन्थैः अनैकान्तिकम्[8]।

[ बादरायणवचनविरोधाक्षेपनिरासः ]

§ यत्तु भगवता बादरायणेन निरस्तत्वादिति, तदसत्। कथं हि भगवान् द्वैपायनः सकललोकादर्शभूत[9]परमभागवतो भागवतं शास्त्रं[10] निरस्यतीत्युत्प्रेक्ष्येत[11], य एवमाह—

[ भारतान्तर्गतपञ्चरात्रप्रशंसा ]

‡ "इदं शतसहस्राद्धि[12] भारताख्यानविस्तरात्[13]।
आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम्॥
नवनीतं यथा दध्नो[14] द्विपदां ब्राह्मणो यथा।
आरण्यकं च वेदेभ्य ओषधीभ्यो यथाऽमृतम्॥"

[1] P, PM—न चान्त्यः
$M_4$, $M_6$, $V_1$ & A—न चाप्यन्यः
[2] $M_3$ has the following :
अथानुदितहोमादेरन्यत्र स्तुतिदर्शनात्।
अतत्परत्व....स्तथात्रापि भविष्यति॥
वेदप्रशंसा बहुशः पञ्चरात्रेऽपि दृश्यते।
दृश्यते पञ्चरात्रेऽपि बहुशो वेदप्रशंसा॥
[3] T, $M_1$, $M_2$, $M_4$ to $M_7$, My, $V_1$ & B add न
[4] $M_4$ & B repeat the following :
समस्तवैदिकसंस्कारेभ्यः न संस्कारान्तरं असिद्धश्च।
[5] $M_1$, $M_2$, $M_4$, $M_7$ & B—धर्मप्रमाणाभिमत°
[6] $M_3$ & B omit अ
[7] $M_3$—वेद°
[8] $M_2$—°अनेकान्तिकम्
[9] $M_6$—सकललोकादर्शनभूत°
[10] My—भागवतशास्त्रम्
[11] $M_1$, $M_2$, $M_4$, B—°उत्प्रेक्ष्यते; $M_3$—°उत्प्रेक्षेते
[12] $M_2$—शतसहस्राख्यम्
[13] $M_2$ reads भारताख्यानमुत्तमम् and adds another word विस्तरः in which case the metre becomes defective.
[14] $M_5$—दध्ना

* See p. 19 above, for *pūrvapakṣa*.
§ See *ibid.*
‡ *Māhābhārata, śānti*, 331. 2-3.



† "इदं महोपनिषदं चतुर्वेदसमन्वितम्।
सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्॥"
‡ [1]"इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्।
ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा॥"
* "भविष्यति प्रमाणं वै एतदेवानुशासनम्।" इति।

भीष्मपर्वण्यपि[2]—

§ "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च $कृतलक्षणैः।
अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः[3]॥
× सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः।
द्वापरस्य युगस्यान्ते, आदौ कलियुगस्य च॥" इति।

तथा[4] शान्तिपर्वण्यपि—

** "अवश्यं वैष्णवो दीक्षां प्रविशेत्[5] सर्वयत्नतः।
दीक्षिताय विशेषेण प्रसीदेन्नान्यथा हरिः॥"

[1] $M_8$ omits this and the following two lines including the word इति
[2] $M_8$—भीष्मपर्वस्यापि; B omits अपि
[3] $M_1$, $M_7$—मानवः
[4] PM omits तथा and reads शान्तिपर्वणि
[5] $M_6$—प्राविशेत्

† *Ibid.* 326. 100.
इदं पञ्चरात्रं महोपनिषदं—महतीनामुपनिषदामर्थप्रतिपादकम्, वेदार्थप्रतिपादकम्, सांख्ययोगसिद्धान्तसहितं चेत्यर्थः।
‡ *Ibid.* (Gorakhpur edn.) 322. 33a, 41b.
ऋग्भिः, सामभिः, अथर्वेण, अङ्गिरसा च दृष्टा ये मन्त्राः तैरपि जुष्टं सहितमिति भावः।
* *Ibid.* (Critical edn.) 322.41a.
§ *Ibid.* 62. 38-39.
One of the chief characteristics of the *Pañcarātra*-religion is its liberal catholicity. It offers hope of salvation to all, without the distinctions of caste and sex.
$ 'कृतलक्षणैः', कृतदीक्षैरित्यर्थः।
× *Cf. Īśvarasaṁhitā* I. 10 for a similar statement.
** To be identified.
As all schools of Śaivism, Vaiṣṇavism too insists upon the performance of *Dikṣā*-ceremony.
See *Sāttvata Saṁhitā* II. 11b-12a :
karmavāṅmanasaissamyag bhaktānāṁ parameśvara ॥

‡ "वसन्ते दीक्षयेद्विप्रं ग्रीष्मे राजन्यमेव च[1] ।
शरदस्समये वैश्यं हेमन्ते[2] शूद्रमेव च ॥

---

[1] $M_1$ omits च making the metre defective  [2] $M_2$—हैमन्ते

---

caturṇāmadhikāro vai prāpte dīkṣākrame sati ।

This *Dīkṣā* is threefold, yielding different results to the followers. *Cf. ibid.* XIX. 4 :

kaivalyaphaladāpyekā bhogaikaphaladā parā ।
bhogadaiva tṛtīyā ca prabuddhānāṁ sadaiva hi ॥

Ch. XIX of this *āgama* deals with *Dīkṣā* in detail.

Also see *Parama Saṁhitā* XXXI. 53 :

tisro dīkṣāḥ kṛtā yena vaiṣṇavena tapasvinā ।
sa eva vaiṣṇavaṁ jñānamakhilaṁ śrotumarhati ॥

*Ibid.* XXVII. 41b :

evaṁ dīkṣāṁ tridhā bhinnāṁ uttarottarabhūyasīṁ ॥

Also cf. *ibid.* VIII. 3 :

sā tu bhaktivaśāt nṝṇāṁ triṣu karmasu niṣṭhitā ।
prathamaṁ samaye paścāt tantrajñāne tato' rcane ॥

The *Dīkṣā*-ceremony is dealt with in ch. VIII of this *Saṁhitā*, in detail. The purpose of Initiation is given in VIII. 1-2 :

ata ūrdhvaṁ pravakṣyāmi dīkṣāyā lakṣaṇaṁ paraṁ ।
yāmavāpya viśuddhātmā vaiṣṇavaḥ siddhimṛcchati ॥
apratiṣṭhasya manasaḥ śreyomārgamavindataḥ ।
upāyaṁ bandhanasyāhur dīkṣāṁ dīkṣāviśāradāḥ ॥

Also *cf. ibid.* śl. 6b-7a :

yastu tīvraḥ prayuñjīta dīkṣāṁ bhaktisamanvitaḥ ॥
tasya devaprasādena sakalaṁ siddhyatīpsitam ।

The three types of *Dīkṣā* called *Samaya, Tantra* and *Arcana*, are defined and explained in ch. VIII. śls. 7b-11a.

Also, *cf. ibid.* III. 29b-30a :

brāhmaṇāḥ kṣatriyā vaiśyāśśūdrā yoṣita eva ca ॥
bhaktiyuktāḥ svabhāvena kuryād devasya pūjanam ।

It is said that one who undertakes *Dīkṣā* is better qualified than one without it. *Cf. ibid.* III. 39 :

dvividhaḥ puruṣo brahman dīkṣito' dīkṣitastathā ।
dīkṣitassakalaṁ kuryāt ekadeśamadīkṣitaḥ ॥

*Cf.* also *Aniruddha Saṁhitā* ch. IV and *Viṣṇu Saṁhitā* ch. X for different treatments of *Dīkṣā*.

‡ To be traced out.



स्त्रियं च वर्षाकाले[1] तु पञ्चरात्रविधानतः ।"

तथा—

† "वेदैश्च[2]तुर्भिस्सहितं[3] कृतं मेरौ महागिरौ ।"
एवमादिवचोभङ्गीशतैस्सादरमीरितैः ॥

‡ वेदान्तसारसर्वस्वमात्मीयं परमं[4] मतम् ।
पञ्चरात्रं निराकुर्यात् कथं द्वैपायनस्स्वयम्[5] ?

[ उत्पत्त्यसम्भवाधिकरणतत्त्वविचारः ]

कथं तर्हि[6]दं सूत्रम्— § 'उत्पत्त्यसम्भवात्' इति ? किं वाऽस्य सूत्रस्य हृदयम् ?

* इदमस्य सूत्रस्य$— भागवतशास्त्रे[7] जीवोत्पत्तेः प्रतिपाद्यमानत्वात्, तस्याश्च श्रुतिन्यायविरोधेनासम्भवात् असमीचीनं शास्त्रमिति ।

यद्येष सूत्रार्थः, तर्हि पञ्चरात्रशास्त्र[8]निराकरणपरमिदं[9] सूत्रम्[10]। न हि पञ्चरात्रशास्त्रेषु जीवोत्पत्तिरंगीकृता, येनैवमुच्यते ।

---

[1] $M_4$, $M_5$, $V_1$, A &B—वर्षंकाले
[2] $M_3$—वैश्यै:
[3] P, PM, T—समितम्; A, $V_1$ & $M_5$—सहित:; $M_4$—संहितम्
[4] $M_3$—°आत्मीयं च परम्
[5] B—द्वैपायनद्वयम्
[6] $M_4$ & B, omit तर्हि
[7] $M_1$, $M_2$, $M_4$, $M_7$, My, B—°शास्त्रेषु $M_3$ & $M_6$—°शास्त्रैः
[8] $M_1$, $M_2$, $M_4$, $M_7$, My, B, omit शास्त्र
[9] P, PM, T, $M_1$, $M_3$, $M_5$, $M_6$, $V_1$ & A, omit इदम्
[10] $M_3$—स्मृतम्

---

† *Mahābhārata, śānti*, 322. 28b :

‡ Yāmuna holds Vyāsa, the author of the *Mahābhārata* to be one with Bādarāyaṇa, the author of the *Brahmasūtra*.

§ *Brahmasūtra* II. ii. -39.

* The 'pūrvapakṣa' arguments advanced here are those made by Śaṅkara. See his commentary on the four *sūtras* comprising the 'Utpattyasambhava' or the 'Pāñcarātra' section : *Brahmasūtra* II. ii. 42-45.

$ 'हृदयम्' इति शेषः ।

‡ नन्वस्तीदं वचनं—‘वासुदेवः परमा[1] प्रकृतिः[2] परमात्मा; ततस्संकर्षणो नाम जीवो जायते; संकर्षणात् प्रद्युम्नसंज्ञं मनो जायते; ततो[3]ऽनिरुद्धनामा[4] अहंकारो जायत’ इति ।

सत्यमस्ति—

नानेन वचनेनेह जीवजन्माऽभिधीयते[5] ।
* अपि तु व्यूहरूपेण व्यक्तिर्देवस्य कीर्त्यते ॥
† तत्र संव्यवहारार्थं व्यूहभेदस्तु युज्यते[6] ।
वर्णानामानुलोम्येन पूज्यभेदप्रसिद्धये ॥

---

1 All but $M_1$—परा
2 $M_3$—पराकृतिः
3 $M_1$, $M_2$, $M_4$, My, B—प्रद्युम्नात्
4 A—अनिरुद्धो नाम°
5 P & B omit this line and the words सत्यमस्ति; My reads नानेन वचनेनेह जीवं मत्वाऽभिधीयते
6 P, PM, T, A, $M_5$, $M_6$ & $V_1$ read तत्र संव्यवहारार्थं जीवशब्दः प्रयुज्यते; $M_3$ omits this and the preceding line.

---

‡ *Cf. Ahirbudhnya Saṁhitā* V. 28a :
‘भगवान् वासुदेवस्स परमा प्रकृतिश्च सा ।’
*Cf.* Śaṅkara under *Brahmasūtra* II. ii. 42 :
‘यत्पुनरिदमुच्यते—वासुदेवात् संकर्षण उत्पद्यते, संकर्षणाच्च प्रद्युम्नः, प्रद्युम्नाच्च अनिरुद्ध इति ।’ etc.

* *Cf. Ahirbudhnya Saṁhitā*, ch. V :
vyūhā ete viśālākṣāścatvārah puruṣottamāḥ ।
nirdoṣā niraniṣṭāśca niravadyāssanātanāḥ ॥ [ śl.41 ]
anantamakṣaraṁ caitat cāturātmyaṁ mahāmune । [ śl.42a ]
tatra sthūladaśāyāṁ te vyaktibhāvamupāgatāḥ ॥ [ śl.43b ]

† ‘संव्यवहारार्थं’ विशेषप्रतिपादनार्थमिति भावः ।
*Cf. Ahirbudhnya Saṁhitā* : V. 44 :
jagatāmupakārāya saccidānandalakṣaṇāḥ ।
manaālaṁbanāyaiṣā cāturātmyavyavasthitiḥ ॥

This *Saṁhitā* thus clarifies that the four-fold manifestation of the Supreme Lord Vāsudeva, as Saṅkarṣaṇa, Pradyumna and Aniruddha is for the welfare of the creation, by facilitating mental concentration in different degrees for aspirants of different capacities.

This four-fold manifestation has got a purpose, says the *Sāttvata Saṁhitā*, namely, facilitating the worship by the four castes, Brāhmaṇa, Kṣatriya, Vaiśya and Śūdra, respectively.

It is only the Brāhmaṇa that is entitled to worship all these four manifestations of God, *viz.*, Vāsudeva, Saṅkarṣaṇa, Pradyumna and Aniruddha. For the remaining castes, however, only particular forms of God are ordained for worship. For further details, see the *Sāttvata Saṁhitā* ch. VII.



यथाऽऽहुः—

* “वर्णैश्चतुर्भिः चत्वारः पूजनीया यथाक्रमम् ।” इति ।

---

*Cf.* the following passages from the *Sāttvata Saṁhitā* :
abjāntamarcanaṁ viṣṇor niṣkāmenāgrajanmanā ॥ [ VII. 29b ]
evaṁ saṅkarṣaṇādyaṁ tu vāsudevāntamarcanam ।
vihitaṁ *kṣatrajāter*vai kartavyatvena sarvadā ॥
pradyumnādyaṁ tu *vaiśyasya* musalāntamudāhṛtaṁ ।
*sacchūdrasyā*niruddhādyaṁ pradyumnāntaṁ sadaiva hi ॥ [ 30-31 ]
sarvatrādhikṛto *vipro* vāsudevādipūjane ।
yathā tathā na kṣatrādyāḥ tasmācchāstroktamācaret ॥ [ 55 ]
caturṇāṁ brāhmaṇādīnāṁ svayamevānukampayā ।
cāturātmyena rūpeṇa caturdhā vyaktimeti ca ॥ [ XII.17 ]
evaṁstvanugrahārthaṁ tu śaktyātmā bhāvitātmanām ।
bibharti bahubhedotthaṁ rūpaṁ sadvāhanasthitam ॥ [ 176 ]

*Cf.* the following from the *Parama Saṁhitā* II. 99b-101 :
sa tu devaścaturvyūho bhuvaneṣvadhitiṣṭhate ॥
dharmādiṣu parāṁ siddhimavāpya hitakāmyayā ।
vāsudevassmṛto dharmo jñānaṁ saṅkarṣaṇassmṛtaḥ ॥
tathā vimuktaḥ pradyumnaḥ aniruddhassakaleśvaraḥ ।
tatra vyaktāssamastāśca catvārastu guṇā ime ॥

The above passages from the Parama Saṁhitā point out that the four forms of the Lord, viz., Vāsudeva, Saṅkarṣaṇa, Pradyumna and Aniruddha are intended by the Lord to initiate the qualities of Dharma, Jñāna, Vimukti and Aiśvarya respectively, in the beings created.

The fact that the four manifestations of the Lord are designed by the Lord Himself to facilitate the worship by the four different castes is briefly set forth by the *Pauṣkara Saṁhitā* ( ch. 38. śl. 4a, 5a ), which Rāmānuja quotes in his *Śrībhāṣya* under II. ii. 41, p. 829 :

kartavyatvena vai yatra cāturātmyamupāsate ।
kramāgataiḥ svasaṁjñābhiḥ brāhmaṇairāgamam tu tat ।

*Cf.* also *Viṣvaksena Saṁhitā* XI. 146-147 :
vāsudevaḥ parā mūrtissthāpanīyā dvijottamaiḥ ।
dvitīyā sthāpyate mūrtiḥ kṣatriyair mokṣakāṅkṣibhiḥ ॥
pradyumnākhyā tu viprendra vaiśyaissthāpyā mumukṣubhiḥ ।
śūdraissaṁsthāpyate mūrtiraniruddho jagadguruḥ ॥

* To be identified.

अपि च जीवमनोऽहङ्कारशब्दा न तन्मात्रवचनाः[1], अपि तु तत्तदधिष्ठानाधिकृतविलक्षणवि[2]ग्रहवत्पु[3]रुषाभिधाना इति ।

विचित्रदेहसम्पत्तिः जन्मेति व्यपदिश्यते ।
* 'तोयेन जीवान्' इत्येतत् यजुर्मूर्ध्नि यथा वचः ॥

† अपि च, जीवोत्पत्ति[4]प्रलयादिगोचराः श्रुतिस्मृतिलोकवादाः § 'चराचरव्यपाश्रयस्तु स्यात् तद्व्य[5]पदेशो[6]ऽभाक्तः[7] तद्भाव[8]भावित्वात्' इत्यत्रैव सूत्रकारेण कृतनिर्वाहाः । किञ्च, ‡ 'नाऽऽत्मा श्रुतेः, नित्यत्वाच्च ताभ्यः' इत्यत्रैव ब्रह्मणो[9] जीवोत्पत्तिः श्रुतिस्मृतिन्यायविरोधेन निरस्ता सती न[10] पुनरुपन्यासं प्रयोजयतीति अनधिकरणीयमधिकरणमापद्येत। एतेन[11] ** 'न च कर्तुः करणम्' इति सूत्रं व्याख्यातम् । न ह्यत्र कर्तुः सङ्कर्षणात् करणस्य मनस उत्पत्तिरुच्यते । उक्तं हि[12] 'विलक्षणपुरुषवचना[13] एते[14] शब्दा' इति ।

[1] M₁, M₂, M₄, My, B—°वाचकाः
[2] M₄ omits वि
[3] M₃—°विग्रहात्°
[4] M₂ adds आदि
[5] M₂ & M₄ omit तत
[6] M₁—°तस्याव्यपदेशो°
[7] M₃ reads तद्व्यपदेशोक्तिः ( no भाक्तः ) The Śrībhāṣya reads only अभाक्तः
[8] M₃ adds another भाव
[9] M₁, M₇—ब्रह्मणा
[10] M₄ omits न
[11] M₄ & B omit न
[12] M₅ omits हि
[13] M₄, B—°पुरुषवचा
[14] M₃, M₆ add च

* *Taittirīya Āraṇyaka* X-i-1b; also *Mahānārāyaṇa* I-4b.

† Here Yāmuna points out the discrepancy in Śaṅkara's division of the *Brahmasūtra* into Adhikaraṇas. According to Śaṅkara, the aphorism "carācaravyapāśrayastu" *etc*., forms another topic ( *adhikaraṇa* ). He argues that the origination of the *jīva* is not of primary significance. But according to Yāmuna, this point has already been clarified by the sūtra : "nātmā śruteḥ", *etc*., so much so that the sūtra "carācara" *etc*., becomes redundant and thus becomes "anadhikaraṇīya", that is to say that it does not deserve treatment as a separate topic.

§ *Brahmasūtra* II. iii. 17.

‡ *Ibid.* II. iii. 18.

** *Ibid.* II. ii 40.



‡ किमिति वा कर्तुः करणं[1] नोत्पद्यते ? देवदत्तादेः[2] कर्तुः, परशुप्रभृतिकरणोत्पत्त्यदर्शनादिति चेत्, हन्त हतस्तर्हि अपगतसकलकरणकलापस्वमहिमप्रतिष्ठब्रह्मणः प्राणमनः[3]प्रभृतिनिखिलकरणोत्पत्त्यभ्युपगमः[4]— $ 'एतस्माज्जा[5]यते प्राणो मनः सर्वेन्द्रियाणि च' इति ।

* अथ श्रुतिप्रसिद्धत्वात् तत्[6] तथैवाभ्युपेयते ।
पञ्चरात्रप्रसिद्धत्वादिदं किं नाभ्युपैषि[7] भोः ?[8]

न हि स्मृति[9]प्रसिद्धार्थ[10]परित्यागोऽतिशोभनः ।
निर्दोषज्ञानजन्मत्वात्[1] प्रामाण्यं हि समं द्वयोः ॥

§ यत्तु चत्वार एते किं समानैश्वर्यभागिनः ।
स्वतन्त्राः[12] ? किमुतैकस्य स्वेच्छामूर्तिचतुष्टयी[13] ?

[1] B₁ adds इति वा कर्तुः करणम्
[2] My—देवदत्तात्
[3] M₂ omits मनः
[4] M₃—°अभ्युपपन्नः
[5] M₃ omits एतस्मात्
[6] B omits तत्, making the metre defective
[7] T, M₂, M₄, M₆, M₇, My, V₁, B—नाभ्युपेषि
[8] M₃ has only one line instead of this and the preceding line : 'अथ श्रु त् इदं किं नाभ्युपैषिभोः'
[9] M₂—श्रुति°
[10] M₃, M₆—°प्रसिद्धत्वात्
[11] B—°जन्यत्वात्
[12] M₁, M₂, M₇, My, B, omit this word, rendering the metre defective.
[13] M₁—°चतुष्टयम्

‡ *Cf.* Śaṅkara on II-ii-43 : "न च कर्तुः करणम् । इतश्च असङ्गतैषा कल्पना, यस्मान्न हि लोके कर्तुः देवदत्तादेः करणं परश्वाद्युत्पद्यमानं दृश्यते । वर्णयन्ति च भागवताः 'कर्तुर्जीवात् सङ्कर्षणसंज्ञकात् करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते ; कर्तृजाच्च तस्मादनिरुद्धसंज्ञकोऽहङ्कार उत्पद्यते' इति । न चैतत् दृष्टान्तमन्तरेण अध्यवसातुं शक्नुमः । न चैवंभूतां श्रुतिमुपलभामहे ।"

$ *Muṇḍakopaniṣat* II-i-3.

* Yāmuna here pleads for the validity of the *Pāñcarātrāgamas* on the ground that they, like the Vedas, are based upon knowledge that is free from all defects. *Cf.* the inferential statement made by Yāmuna above :
vivādādhyāsitaṁ tantraṁ pramāṇamiti gṛhyatām ।
nirdoṣajñānajanmatvāt jyotiṣṭomādivākyavat ॥

§ *Cf.* Śaṅkara on II. ii. 44.
"अत्रोच्यते—एवमपि तदप्रतिषेधः, उत्पत्त्यसंभवस्याप्रतिषेधः...... यदि तावदयमभिप्रायः—परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मकत्वमस्तीति, ततोऽनेकेश्वरकल्पनानर्थक्यम्; एकेनैवेश्वरेण

इति विकल्प्य—

> समानैश्वर्यभागित्वे तुल्यत्वात् नैव कार्यता ।
> एकस्य मूर्तिभेदश्चेत् किं भेदेन प्रयोजनम् ?

इति दूषयतीति व्याख्यातं †'विज्ञानादिभावे वा तदप्रतिषेध' इति, तदयुक्तम्— असम्भावनीयत्वात् विकल्पस्य । न हि केनचिदीश्वरवादिनाऽनेकेश्वरं जगदभ्युपगतम्; विशेषतश्च पाञ्च[1]रात्रिकैः, *'वासुदेव[2] एकः[3] परा प्रकृतिरि'ति[4] वदद्भिः । §किन्तु स एव[5] भगवान् लीला[6]विरचितचतुर्भेदः सकलमपि जगत् संरक्षतीति ।

---

[1] B—पञ्च°
[2] P & PM add एव
[3] $M_2$ & My add एव
[4] $M_3$—पराकृतिरिति
[5] $M_4$ adds another स एव
[6] $M_3$ भगवल्लीला°

---

ईश्वरकार्यसिद्धेः । सिद्धान्तहानिश्च—भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । अथायमभिप्रायः—एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति, तथापि तदवस्थ एव उत्पत्त्यसम्भवः । न हि वासुदेवात् सङ्कर्षणस्योत्पत्तिस्संभवति; संकर्षणाच्च प्रद्युम्नस्य; प्रद्युम्नाच्चानिरुद्धस्य; अतिशयाभावात् । भवितव्यं हि कार्यकारणयोरतिशयेन, यथा मृद्घटयोः । न हि असत्यतिशये कार्यं कारणमित्यवकल्पते; न च पञ्चरात्रसिद्धान्तिभिः वासुदेवादिष्वेकस्मिन् सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते । वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते । न चैते भगवद्व्यूहाः चतुस्संख्यायामेव अवतिष्ठेरन् ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात् ।"

† *Brahmasūtra-II-ii-41.*

* *Cf. Ahirbudhnya Saṁhitā V-28a* :

'भगवान् वासुदेवः स परमा प्रकृतिश्च सा ।'

§ *Cf. ibid.* śls. 21b-24 :

"तत्र ज्ञानमयत्वेन देवस्संकर्षणो बली ॥
व्यनक्त्यैकान्तिकं मार्गं भगवत्प्राप्तिसाधनम् ।
वीर्यैश्वर्यमयो देवः प्रद्युम्नः पुरुषोत्तमः ॥
स्थितः शास्त्रार्थभावेन भगवत्प्राप्तिवर्त्मना ।
शास्त्रार्थस्य फलं यत्तत् भगवत्प्राप्तिलक्षणम् ॥
प्रापयत्यनिरुद्धस्सन् साधकान् पुरुषोत्तमः ।
शास्त्रशास्त्रार्थतत्साध्यफलनिर्वाहका इमे ॥"

*Cf. Philosophy of Viśiṣṭādvaita*, p.156 :

"Vāsudeva, the perfect self, manifests Himself in the interests of the meditational needs of the devotee, as Saṅkarṣaṇa with the two qualities of *jñāna* and *bala*, as Pradyumna with the qualities of *aiśvarya* and *vīrya*, and as Aniruddha with Śakti and Tejas without any diminution of Divinity".



न चेदमनुपपन्नम्[1] । बलभरतावरजा[2]ग्रजादि[3]प्रादुर्भाववदुपपत्तेः[4] । *यथैव हि[5] भगवतः स्वलीलाविरचितगगनपवनहरविरिञ्चादि[6]प्रपञ्चस्याचिन्त्यमहिमलीलैकरस[7]प्रयोजनस्य रामलक्ष्मणभरतशत्रुघ्नादिस्वच्छन्द[8]विग्रहा न विरोत्स्यन्ते, एवं संकर्षणप्रद्युम्नादिभेदा इति ।

यत्परं †'विप्रतिषेधात्' इति 'चतुर्षु वेदेष्वि[9]'ति श्रुतिवि[10]प्रतिषेधात्[11] तन्त्राणां[12], परस्परवि[13]प्रतिषेधाद्वा अप्रमाणमिति[14]; तत्र[15] श्रुतिवि[16]प्रतिषेधस्तु प्रागेव प्रत्युक्तः । परस्परविप्रतिषेधस्तु §प्रधान[17]गुणसामान्यविशेषादिन्याय[18]सम्पादितवचन[19]व्यक्तीनां‡

---

[1] $M_8$—न चेदनुपपन्नम्
[2] B omits अवरज
[3] $M_1$—°अग्रजाति°
[4] $M_1$, $M_2$, $M_4$, $M_7$, My, B °उपपन्नत्वात
[5] B omits यथैव हि
[6] P—°विरीञ्चयादि°
[7] P, PM, T, $M_3$, $M_5$, $M_6$, $M_7$, $V_1$, A omit रस
[8] P—°स्वच्छन्दाः
[9] A—चतुर्वेदेष्विति
[10] $M_2$ omits वि
[11] $M_5$—°विप्रतिषेधाः
[12] $M_3$ omits श्रुतिविप्रतिषेधात् तन्त्राणाम्
[13] $M_3$ omits वि
[14] $M_6$—°विप्रतिषेधात् वादप्रमाणमिति
[15] $M_1$—तन्त्र°
[16] A, My, $V_1$—omit वि
[17] $M_1$, $M_7$—प्राधान्य°
[18] $M_2$ omits न्याय
[19] $M_1$ omits वचन

---

* *Cf. Sāttvata Saṁhitā* IV. 33-34 :

"यथांबरस्थः सविता त्वेक एव महामते । जलाश्रयाणि चाश्रित्य बहुत्वं संप्रदर्शयेत् ।
एवमेकोऽपि भगवान् नानामन्त्राश्रयेषु च । तुर्यादिपदसंस्थेषु बहुत्वमुपयाति च ॥"

The cause behind the manifestation of the Lord into different forms is His mere sport ( *krīḍā* or *līlā* ) and the purpose of this manifestation is protection for the good. *Cf. Ahirbudhnya Saṁhitā* ch. 36 śls. 64, 65.

"प्रतित्रेतायुगं देवः साधुत्राणकृते हरिः । रामलक्ष्मणशत्रुघ्नभरताद्यात्मना स्वयम् ॥
चतुर्धाऽवस्थितः तद्वत् चक्रात्मा हरिरेव हि । गुणप्रधानभावस्तु रामादेरिव युज्यते ॥"

† *Brahmasūtra* : II-ii-42. The reading found in the Śrībhāṣya and Śāṅkarabhāṣya is : 'विप्रतिषेधाच्च'. But Yāmuna, throughout has it as 'विप्रतिषेधात्'.

*Cf.* Śaṅkara on II-ii-45 : 'विप्रतिषेधाच्च'.

"विप्रतिषेधश्चास्मिन् शास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः । 'ज्ञानैश्वर्यबलवीर्यतेजांसि गुणाः आत्मान एवैते भगवन्तो वासुदेवा' इत्यादिदर्शनात् । वेदविप्रतिषेधश्च भवति—'चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवान्' इत्यादिवेदनिन्दादर्शनात् ।"

§ 'प्रधानगुणन्यायः' = अङ्गाङ्गिभावः; 'सामान्यविशेषन्यायः' = छागपशुन्यायः ।

‡ वचनव्यक्तीनां = वचनान्वयक्रमाणाम् ।

तन्त्राणां नास्त्येव। न्यायानुग्रहरहितानां तु वचसां[1] न क्वचिदपि परिनिश्चायकत्वम्। यथाऽऽह—

‡ 'न्यायसम्पादितव्यक्ति[2] पश्चाद्वाक्यार्थबोधकम्[3]' इति।

तस्मात् सूत्रकारेण §'इदं महोपनिषदम्' इत्यादिवचनैः, वेदेभ्यो[4]ऽविशेषेण[5]¶ अभिमततरप्रामाण्येषु पञ्चरात्रतन्त्रेषु अविद्यमानजीवोत्पत्तिप्रतिपादनाध्यारोपेण तन्निराकरणपरतया सूत्रं व्याख्यायमानं व्याख्यातॄणामेवाख्यातिं ख्यापयतीत्यलं प्रबन्धेन।

[ सूत्रसङ्गतिप्रतिपादनम् ]

तत्रैष[6] सूत्रार्थः। पूर्वं स्वाभिप्रेत[7]समयपरिपन्थि[8]कपिलकाश्यपसुगतजिनपशुपतिमतानां श्रुतिन्यायविरोधात् असामञ्जस्यं प्रतिपाद्याधुना स्वाभिप्रेतपञ्चरात्रतन्त्राणामपि इतरसमयसमानपरिगणनात्[9] बुद्धौ सन्निहितानामि*तरसमयवद[10]सामञ्जस्यमाशंक्य प्रामाण्यं †व्युत्पाद्यते[11]।

[ सूत्रार्थविवरणम् ]

---

1 $M_2$, My—वचनानाम्
2 $M_1$ adds वचन
3 $M_3$—°बोधनम्
4 $M_2$—°वेद्येभ्यः
5 We split here as अविशेषेण; no printed text does so. Our reading is in conformity with Yāmun's statements, that Pañcarātra is equal in authority to the Vedas.
6 $M_4$—तत्रैव
7 B—स्वात्त°
8 $M_1$, $M_7$, A, B—°परिबन्धि°; $M_3$ adds क
9 $M_3$ repeats श्रुतिन्यायविरोधादसामञ्जस्यम्
10 $M_3$—°इतरसमयवाद°
11 $M_1$—उत्पाद्यते

---

‡ The source is yet to be identified. This verse, however, is quoted in full by Sudarśana, in his commentary on the *Śribhāṣya*, I-i-1; pp.168-169 :

"पदजातं श्रुतं सर्वं सारितानन्विताथकम्।
न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम्॥"

Vedāntadeśika too quotes this in his *Nyāyapariśuddhi*, p.151.

§ *Mahābhārata, Śānti*, ch.326.100.

¶ 'अविशेषेण' समानतया इत्यर्थः।

* तन्त्रत्वसामान्येन सन्निहितानामिति भावः।

† व्युत्पाद्यते=स्थाप्यते।



§ तत्राद्येन[1] सूत्रद्वयेन[2] पूर्वपक्ष उपक्षिप्यते[3]। तथा हि—पञ्चरात्रशास्त्रमप्रमाणम्; उत्पत्त्यसम्भवात्—प्रतिपाद्यमानायाः सङ्कर्षणाद्युत्पत्तेरसम्भवात्। कथमसम्भवः[4]? उभयथाऽप्यनुपपत्तेः[5]। तथा हि—

किन्नु[6] चत्वार एवैते समानैश्वर्यभागिनः?
एको वा स्यात् चतुर्भेदे[7]? द्वेधाऽप्युत्पत्त्यसम्भवः[8]॥

समानैश्वर्यभागित्वे तुल्यत्वात् नैव सृज्यता[9]।
एकात्मत्वेऽभ्युपेतेऽपि तथोत्पत्तेरसम्भवः॥

स्रष्टृ[10]सृज्यविभागो हि नैकस्मिन्नवकल्पते[11]।

तथा *'न च[12] कर्तुः करणम्'। इतश्चाप्रमाणम्। कर्तुस्सङ्कर्षणसंज्ञात् [13]जीवात् करणस्य प्रद्युम्नसंज्ञस्य मनस उत्पत्त्यसम्भवात्। न हि देवदत्तात् परशुरुत्पद्यत इति।

† एवं वा—*'न च कर्तुः करणम्[14]'। कर्तुः सङ्कर्षणात् न करणमुत्पद्यते। ब्रह्मण एव समस्तकरणोत्पत्तिश्रुतेः— $'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति।

---

1 B—तत्र वाद्येन
2 B omits सूत्रद्वयेन
3 $M_3$ omits this line in full.
4 $M_3$, My—कथं सम्भवः
5 B—°उपपत्तेः
6 PM—किन्तु
7 $M_1$ to $M_4$, $M_6$. $M_7$ & B—चतुर्भेदः
8 P, PM—द्वेधा व्युपत्त्यसम्भवः
9 P, PM, T, A, $V_1$, $M_3$, $M_5$—सृज्यते
10 PM, $M_4$, $M_6$—सृष्ट°
11 $M_2$—लोकेऽस्मिन्नवकल्प्यते; $M_3$—नैकस्मिन्नेव कल्प्यते; $M_4$, B—नैकस्मिन्नावकल्पते; $M_6$—मतेऽस्मिन्नवकल्पते
12 My omits च
13 $M_1$, $M_2$, $M_4$, $M_7$ & B omit from जीवात् upto °संज्ञस्य
14 P & PM add इतश्च

---

§ According to Śaṅkara, all the four aphorisms of the *utpattyasambhava* section [ II-ii-42-45 ] put forth the refutation of the *Pañcarātra*.

* *Brahmasūtra* II. ii. 40.

† *Cf. Śrībhāṣya* under II. ii. 40, where almost the same words are used.

$ *Muṇḍakopaniṣad* II. i. 3.

*'विज्ञानादिभावे वा तदप्रतिषेध' इति । 'वा'शब्दात् पक्षो विपरिवर्तते । यदुक्तम्— 'उभयथाऽपि सङ्कर्षणाद्युत्पत्तेरसम्भवादप्रामाण्यमिति,' नैतदस्ति[1] । तस्याः सङ्कर्षणाद्युत्पत्तेरप्रतिषेधः । यदि हि विज्ञानादय[2] एते† न भवेयुः, स्यादुत्पत्ति[3]प्रतिषेधः । विज्ञानं चादि चेति[4] 'विज्ञानादि' ब्रह्म । तद्भावे ब्रह्मभावे[5] उत्पत्तेरप्रतिषेधः ।

§एतदुक्तं भवति— ‡एकस्यैव परमात्मनो वासुदेवस्यापरिच्छिन्नशक्तेः $स्वमायावेशवशात् कार्य[6]कारणभावोपपत्तिरिति ।

1 $M_3$—°असंभवः प्रामाण्यमपि नैवास्ति
2 $M_6$—विज्ञादयः
3 $M_6$—स्यादुत्पत्तिः
4 $M_1$ $M_2$, $M_4$, $M_6$, $M_7$, My, B—विज्ञानं च तदादि चेति
5 $M_2$ omits ब्रह्मभावे
6 $M_1$ adds onother कार्य

* *Cf. Śrībhāṣya* under II.ii.41 : "vijñānādibhāve vā tadapratiṣedhaḥ," where again the same words are used.

† 'एते' सङ्कर्षणादयः ।

§ चत्वार ईश्वरा इति पक्षः परित्यक्तः । तदेकत्वपक्षः समादृतः । एक एव भगवान् सर्वेश्वरः स्वलीलया जगदवनाय चतुर्धाऽवतरतीति सिद्धान्तः ।

‡ *Vide Ahirbudhnya Saṁhitā* Ch. V :

"पुरुषाः पुण्डरीकाक्षा व्यूहाः शक्तिमया हरेः ।" [25a]

"सर्वशक्तिमयो देवो वासुदेवः सिसृक्षया ॥
विभजत्यात्मनाऽऽत्मानं यस्स सङ्कर्षणस्स्मृतः ।" [29b-30a]

"अनन्त एव भगवान् वासुदेवस्सनातनः ।
तत्र ज्ञानबलोन्मेषात् स्वसंकल्पप्रचोदितात् ॥
अनन्त एव भगवान् देवस्संकर्षणोऽच्युतः ।" [34-35a]

"अनन्त एव भगवान् प्रद्युम्नः पुरुषोत्तमः ।" [36a]

अनन्त एव भगवाननिरुद्धो भवत्युत ॥" [38b]

The words "ananta eva bhagavān" occuring in 34a, 35a, 36a & 38b quoted above, stress the point thatt he Lord is One and only One and that He assumes different forms, without any diminution of His powers and perfections in this process. Therefore, the question raised by Śaṅkara regarding the plurality of God is unwarranted.

$ This Māyā is the Śakti or the Power of the Lord, termed also Jñāna, Vidyā, Saṅkalpa and so on.



यत्तु 'न सङ्कर्षणान्मन उत्पद्यते, ब्रह्मण एव उत्पत्तिश्रुतेः[1]' इति, तदपि तस्य विज्ञानादित्वेन परिहृतम् ।

*अपि च, †'न च कर्तुः करणम्' इति किमुक्तं भवति? किं यस्याः क्रियाया यत् करणं[2], तत्[3] तत्क्रियाकर्तुर्नोत्पद्यते[4]? [5]उत यत् यत्र काऽपि§ करणं, तत्[6] कुतश्चिदपि कर्तुः नोत्पद्यत इति वा?

तत्राद्ये कल्पे[7] सिद्धसाधनतयाऽनुमानस्य वि[8]प्रतिषेधः । न ह्यत्र[9] संकर्षणात् कर्तुः उत्पद्यमानं मनः[10] स्वोत्पादने करणम्, कर्मत्वात् । नाऽपि स्वोत्पत्तौ, कर्तृत्वात् ।

अपरेऽपि कल्पे प्रत्यक्षविप्रतिषेधः । उदकाहरणादौ[11] करणभूतानामपि घटादीनां कर्तुः कुलालादेरुत्पत्तिदर्शनात् । तदिदमाह —‡'विप्रतिषेधात्' इति ।

यद्वा – $सूत्रद्वयस्यास्य व्याख्याना[12]न्तरमुच्यते ।
¶विज्ञानादेः प्रमाणत्वहेतोः भावे×, न[13] युज्यते ॥

1 $M_4$– श्रुतिः
2 $M_1$, $M_7$—किं वास्यां क्रियायां यत्करणम्
$M_2$, My, B—किं यस्यां क्रियायां यत्करणम्
$M_3$ & $M_6$ add न
3 P, PM, $M_1$, $M_3$ & $M_6$ omit तत्
4 $M_2$, $M_3$—नोपपद्यते
5 $M_3$ & $M_6$ omit from उत upto नोत्पद्यते
6 $M_2$ adds another तत्
7 $M_1$, $M_2$, $M_7$, My, B omit कल्पे
8 $M_3$ omits वि
9 $M_1$—न ह्यस्य; $M_6$—न ह्यन्यत्र
10 $M_6$—नः
11 $M_4$—उदाहरणादौ; $M_6$—उदकाभरणादौ
12 $M_3$ omits ना, to the detriment of metre
13 PM reads भावेन as one wood

* These different interpretations are not included by Rāmānuja in his *Śrībhāṣya*.

† *Vide Brahmasūtra*: II.ii.40.

§ 'यत्र क्वापि' क्रियायामिति शेषः ।

‡ *Cf. Brahmasūtra*: II.ii.42.

$ सिद्धान्तसूत्रद्वयस्य—'विज्ञानादिभावे वा तदप्रतिषेधः,' 'विप्रतिषेधात्' इति सूत्रद्वयस्येति भावः ।

¶ 'विज्ञानादेः' ब्रह्मण इत्यर्थः ।

× 'भावे' सद्भावे ।

पञ्च[1]रात्रप्रमाणत्वनिषेधो* ऽति[2]प्रसङ्गतः ।
तत्रानुवादसन्देहज्ञानानुत्पत्तिलक्षणम् ॥
निरस्तमप्रमाणत्वं[3] 'विज्ञान' ग्रहणादिह ।
वक्त्राशयवशप्राप्तमिथ्याशङ्कापनुत्तये[4] ॥
§ 'आदि' शब्देन तन्त्राणामाप्तोक्तत्वं विवक्षितम्[5] ।

तथा हि—

¶य[6]स्साक्षात्कुरुते सदा सहजया बुध्या समस्तं जगत्
यः पुंसामभि[7]वांछितानि दिशति ध्यानैकसन्तर्पितः ।
'नित्यावाप्तसमस्तकाम' इति यं प्राहुः[8] त्रयीपारगाः
तस्मिन् विभ्रम[9]विप्रलम्भनमुखा दोषा भवेयुः कथम्?
†उत्पत्त्यसम्भवो यश्च पूर्वसूत्रद्वयोदितः[10] ।
सङ्कर्षणादिमूर्तीनां, तत्र प्रतिविधीयते ॥

‡ 'विप्रतिषेधात्' इति । पञ्चरात्रस्मरणानुमितभगवत्-प्रत्यक्षविप्रतिषेधात्, तदनुमितश्रुतिवि[11]प्रतिषेधाद्वेति ।

1 PM—पाञ्च°
2 M3—°निषेधाति°
3 M2, My—न निरस्तं प्रमाणत्वम्; B, reads निरस्तं प्रमाणत्वम्, in which case the metre wants in one syllable.
4 M1—°अर्थाशङ्कापनुत्तये
B—°मिथ्याशंक्यापनुत्तये
5 PM omits this line in full.
6 M3—यत्
7 M1, M7, My, B—पुंसामपि°
8 A, M5, V1, T—संप्राहुः
9 M1—विश्रम°
10 T—उदिता; M1, M3—°उदितम्
11 B omits वि

* अन्यथा मन्वादिस्मृतेरपि अप्रामाण्यप्रसक्तेरित्याशयः।

§ The term *ādi* is from *Brahmasūtra* II.ii.41 : 'विज्ञानादिभावे वा तदप्रतिषेधः।' आदिशब्देन दोषराहित्यम्, विज्ञानशब्देन गुणसाहित्यं चाभिप्रेतम्।

¶ *Cf.* The following verse, which, according to tradition, forms the opening verse of Nāthamuni's *Nyāyatattva* :

"यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः ।
तं प्रणम्य हरिं शास्त्रं न्यायतत्त्वं प्रचक्ष्महे ॥"

† पूर्वं जीवमनआदीनामुत्पत्तिर्न सम्भवतीत्यस्य पूर्वपक्षस्य समाधानमुक्तम्। इदानीं 'उत्पत्त्यसम्भव' इत्यादिना 'मूर्तिभेदोऽपि कथम्?' इति शङ्कायाः समाधानमुच्यते।

‡ *Brahmasūtra* II.ii.42.



[ कृत्वाचिन्तया सूत्रविचारः ]

यद्वा[1]—सूत्राणां न्याय[2]प्रदर्शनपरत्वात् पञ्चरात्रश्रुत्योः असन्तमपि विरोधं कृत्वाऽत्र[3] चिन्त्यते[4] । तथा हि—

सति वेदविरुद्धत्वे किन्नु[5] मन्वादिवाक्यवत् ।
अप्रमाणमिदं शास्त्रं प्रमाणं वेति संशये ॥
अप्रमाणं विरुद्धार्थप्रमित्युत्पत्त्यसम्भवात् ।
असम्भवश्च सापेक्षनिरपेक्षत्वहेतुकः ॥

*यावद्धि सापेक्षं पञ्चरात्रस्मरणं[6] मूलप्रमाणोपस्थाप[7]नमुखेन स्वार्थं प्रमातुमुपक्रमते, तावत् निरपेक्षापौरुषेयागमभुवा प्रत्ययेन तदर्थस्यान्यथा परिच्छेदात्, तद्विरुद्धायाः प्रमितेरुत्पत्त्यसम्भवात् ।

§तावद्धि पञ्चरात्रस्य मूलश्रुत्यवबोधनम् ।
प्रत्यक्षशास्त्रशस्त्रेण[8] यावन्मूलं न लूयते ॥

[ सूत्रविवरणमुखेन वेदानामपौरुषेयत्वनिरूपणम् ]

$ननु कथं वेदा वा निरपेक्षाः यावता[9] तेषामपि भगवदनु-

1 M3 & My omit यद्वा
2 A, M2, & M4 omit प्र
3 M1, M2, M4, M7, My & B, omit अत्र
4 M3—तत्र विद्यते; M6—अत्र विद्यते
5 M6—किन्तु
6 P, PM, T, M3, M5, M6, V1 & A add न
7 B omits प
8 M2 & M6—°शास्त्रेण
9 M1—एतावता

* For a discussion on the validity of *smṛtis* when they are in opposition to more powerful means of knowledge, see *Tantravārtika* under I. iii. 3, pp. 82-103.

§ *Cf. ibid.* p. 87 :
tāvadeva sphurantyarthāḥ purastādānumānikāḥ ।
yāvat pratyakṣaśāstreṇa mūlameṣāṁ na kṛntyate ॥

$ This is the contention of the Naiyāyika. He does not accept the "apauruṣeyatva" of the Vedas. They, according to him, are dependent upon the Supreme Being, like the Pāñcarātrāgamas, for their validity, so much so they too are "pauruṣeya", *i.e.*, composed by the Divine Person. This is the point on which Yāmuna differs from the Naiyāyika. The aphorism "na ca kartuḥ karaṇam" (*Brahmasūtra* II. ii. 40) is ingeniously interpreted by Yāmuna to refute the above concept of the Logician, and to establish the "apauruṣeyatva" or the revealed character of the Vedas.

भवसापेक्षमेव[1] प्रमाणत्वं[2], तत्कारणत्वात्[3]। यथैव हि पञ्च[4]रात्र-स्मृतयः तदनुभवसापेक्षाः, एवं वेदा अपीति।

तत्रोच्यते[5]—†'न च कर्तुः[6] करणम्'। न[7] कर्तुः ईश्वरस्य ‡करणं वेदाः। क्रियन्त[8] इति 'करणम्'। कर्मणि ल्युट्[9]। अपौरुषेया[10] वेदा इति यावत्।

§'विज्ञानादिभावे[11] वा तदप्रतिषेधः'। न चैतदस्ति पञ्चरात्र-शास्त्रमप्रमाणमिति[12]; किन्तर्हि—तदप्रतिषेधः। प्रमित्युत्पत्तेरप्रतिषेधः। विरुद्धार्थमपि विकल्पेन प्रमाणमित्यर्थः। असम्भवद्भ्रम[13]-विप्रलम्भभगवदनुभवमूलत्वात्।

'विज्ञानादिभावे'—'विज्ञानं[14]' विशिष्टं ज्ञानम्[15]। असम्भव[16]त्स्खलनमिति[17] यावत्। अन्येषां हि[18] सर्व[19]धर्म[20]शास्त्रनिबन्धॄणां सांसारिकत्वेन, असार्वज्ञ्यात्[21], अनवाप्तकामत्वाच्च[22], सम्भाव्यमानविविधविप्लवं ज्ञानम्। भगवतस्तु स्वाभाविकनिरङ्कुशैश्वर्यस्य श्रुतिशत[23]समधिगतावितथसहजसमस्तधर्माधर्मादिसाक्षात्कारं

[1] A—°सापेक्षत्वमेव

[2] $M_1$, $M_3$ & $M_7$ add न

[3] My—तत्करत्वात्

[4] My—पात्र°

[5] $M_2$, $M_4$, My & B—अत्रोच्यते

[6] $M_5$ adds another कर्तुः

[7] $M_1$, $M_2$, $M_3$, $M_4$, $M_7$, B, omit न

[8] $M_1$—क्रियते

[9] $M_1$, $M_2$, $M_7$ add प्रत्ययः; $M_2$ & $M_7$ read लुट्

[10] $M_1$—पौरुषेयाः

[11] $M_6$—विज्ञानादिति भावे

[12] $M_1$, $M_2$, $M_3$, $M_6$, $M_7$—°प्रमाणमिति

[13] A, $M_2$, $M_5$, $M_6$, My—°असंभवभ्रम°; $M_3$—असंभवात् भ्रम°

[14] $M_3$ omits विज्ञानम्

[15] $M_1$—अविशिष्टज्ञानम्; B—विशिष्टज्ञानम्

[16] $M_3$—असम्भवात्°; PM, My—असम्भव°

[17] B—अस्खलनमिति

[18] $M_1$ omits हि

[19] $M_2$ & B omit सर्व

[20] $M_3$ omits धर्म

[21] My—असर्वज्ञत्वात्

[22] $M_6$—अनपास्तकामत्वाच्च; B—अनवाप्तकारत्वाच्च

[23] $M_3$—श्रुतिप्रबोध°

† *Brahmasūtra*, II. ii. 40.

‡ 'करणं' = 'क्रियमाणं' = 'कार्यम्' इत्यर्थः।

§ *Brahmasūtra*, II. ii. 41.



ज्ञानमिति[1] †'वि[2]ज्ञानमि'त्युक्तम्। तादृशस्य तस्या[3]दिभावे, मूलत्वे सति, ‡तदप्रतिषेधः प्रमाणमेवेति।

ननु कथं श्रुति[4]वि[5]रुद्धस्य तन्त्रस्य प्रामाण्याभ्युपगमः? तत्प्रामाण्ये हि श्रुत्या सह विकल्पः प्राप्नोति। §विकल्पश्च अष्टदोषदुष्टः। स च क्वचि$दन्यतरपरित्यागकारणाभावात्[6] अगत्या[7] अभ्यनुज्ञायते[8]। यथा[9] **'व्रीहिभिर्यजेत', 'यवैर्यजेत* इति। न हि तत्र अन्यतरदपहर्तुं[10] शक्यम्, उभयोरप्यनपेक्षत्वाविशिष्टत्वात्×[11]। न चैवमपि पञ्चरात्रश्रुत्योः विकल्पेन भवितव्यम्, अतुल्यत्वात्। निरपेक्षं हि वैदिकं वचनम्, अपौरुषेयत्वात्[12]। सापेक्षं च पञ्चरात्रवचनमिति कथमनयोर्विकल्पः?

[ पञ्चरात्रस्यापि वेदवन्निरपेक्षत्वकथनम् ]

श्रूयताम्—पञ्चरात्रशास्त्रस्यापि[13] ¶निरपेक्षत्वादेव[14]।

[1] My omits इति

[2] $M_3$ omits वि

[3] $M_2$—तस्य तादृशस्य°

[4] B omits श्रुति

[5] $M_3$ omits वि

[6] $M_2$—°करणाभावात्

[7] $M_1$—°कारणाभावावगत्या

[8] My—अनुज्ञायते

[9] $M_3$—तथा हि; $M_6$—तथा

[10] $M_5$, $M_6$—°अपभर्तुम्

[11] $M_1$, $M_7$—°अनपेक्षत्वात्

[12] $M_2$—अनपेक्षत्वात्

[13] B—°शास्त्रस्यापि

[14] $M_4$—°एवम्

† *Cf. Pādma Saṁhitā*, Jñānapāda, II. 5b :
"विज्ञानं भगवज्ज्ञानं तज्ज्ञानान्मुक्तिरुच्यते।"

‡ 'तदप्रतिषेधः' प्रामाण्यस्याप्रतिषेधः, प्रामाण्यमिति यावत्।

§ *Vide Tantravārtika*, pp. 89-90.
*Cf. Tantraśuddha*, pp. 11-12 :
"व्रीहिभिर्यजेत", "यवैर्यजेत" इत्युभयमपि वाक्यं प्रमाणम्। तत्र व्रीहिवाक्याश्रयणे यववाक्यमनाश्रयणीयं भवति; अशक्यत्वात् युगपत् उभयानुष्ठानस्य। तत्र प्राप्तं यववाक्यगतं प्रामाण्यं विना कारणेनापहातव्यम्; अप्रामाण्यस्य प्रमाणत्वं षष्ठगोचरकल्पमभावप्रमाणावसेयमङ्गीकर्तव्यम्; एवमपि केनापि हेतुना प्रयोगसाधनत्वेन यवाभ्युपगमे पूर्वमपास्तस्य प्रामाण्यस्य पुनराश्रयणीयत्वम्; तन्निरासेनांगीकृतस्य अप्रामाण्यस्य पुनः परित्याग इति चत्वारो दोषा एकस्मिन् वाक्ये प्रसज्यन्ते। द्वितीयेऽपि प्राप्तपरित्यागोऽप्राप्ताश्रयणं परित्यक्तोपादानं यत्नानीतस्य परित्याग इति चत्वारो दोषाः। तथाऽपि तुल्यबलत्वात् गत्यन्तराभावाच्च व्रीहियवयोर्विकल्प आश्रितः।"

$ 'क्वचित्' = वेदवाक्ये

** *Āpastamba Śrautasūtra*, VI. 3.1.13.

* To be identified.

× अनपेक्षत्वाविशिष्टत्वात् = अपौरुषेयत्वात्।

¶ 'निरपेक्षत्वात्', वचनान्तरमूलान्तरनिरपेक्षत्वात्।

'कथं नु पौरुषेयस्य वचसो[1] निरपेक्षता ?'
इति चेत्, इदमाचष्टां[2] पृष्टस्सन्नेष तार्किकः ॥
किमस्य बोधकत्वाय परापेक्षाऽभ्युपेयते ?
किं वा निश्चायकत्वाय ? यथार्थज्ञापनाय वा ?
पुमर्थत्वाय वा ? तत्र चतुर्णामप्यसम्भवः ॥

न खलु †'चक्रवर्त्युपचारेण भगवन्तं समर्चयेत्' इतीदं वचनं श्रूयमाणं बोधकत्वाय किञ्चिदपेक्षते अन्यत्र व्युत्पत्तिग्रहणात्‡ । न च तावता सापेक्षत्वेन दौर्बल्यम् । [3]श्रुतावपि दौर्बल्यप्रसङ्गात् ।

नापि निश्चयजननाय । न हि †'अर्चयेत्' इत्येतत् अर्चयेन्नवेति संशयितं प्रत्ययमुत्पादयति, व्युत्पत्तिप्रतिपत्तिव्याकोपप्रसङ्गात् ।

नापि यथार्थत्वाय[4] । न ह्युत्पन्नं ज्ञानं स्वकारणव्यतिरेकेण यथार्थत्वायापरम[5]पेक्षते । गुणतः प्रामाण्यस्य [6]अयुक्तत्वात्, अनभ्युपगमाच्च ।

न च पुरुषार्थत्वाय[7] परापेक्षा । शास्त्रशरीरपर्यालोचनादेव तत्सिद्धेः । इह हि यथोक्तसंस्कार[8]वतां शास्त्रश्रवणात् तदर्थज्ञानं[9], ततः[10] तदर्थ*पाञ्च[11]कालिकानुष्ठानं, ततो निरतिशयसम्पत्प्राप्तिरिति शास्त्रादेव अवगम्यते ।

---

[1] $M_2$ reads वचनस्य, spoiling the metre.
[2] $M_1$, My—°आचष्ट
[3] $M_3$ omits from श्रुतावपि upto उत्पन्नम् below.
[4] $M_6$—याथार्थत्वाय
[5] PM—°परम्°
[6] $M_3$ omits अ
[7] $M_1$—पौरुषार्थत्वाय
[8] $M_3$—°संस्कार°
[9] $M_5$—शास्त्रश्रवणतत्तदर्थज्ञानम्; B—तदर्थज्ञानाम्
[10] $M_3$—अतः
[11] $M_3$—°पञ्च°

---

† To be identified.
‡ व्युत्पत्तिग्रहणं विना अन्यत् किमपि नापेक्षत इति भावः ।
* *Cf.* *Ahirbudhnya Saṁhitā* ch. XV :
"पाञ्चकालिकमच्छिद्रं कुर्वाणाः शतवार्षिकम् ॥ [15b]
क्षेत्रज्ञं सर्वभूतानां वासुदेवं विशन्ति ते ॥ [17b]
पञ्चकालरतो नित्यं दयाक्षान्तिधृतिस्थितिः ॥ [49b]
प्राप्तवेदान्तविज्ञानो वैष्णवं श्रयते पदम् ॥" [53b]



अथोच्येत[1]—सत्यपि पञ्चरात्रतन्त्राणां[2] स्वतःप्रामाण्ये[3] यावत्[4] [5]तद्वक्तुः आप्ति[6]निश्चयपुरस्सरं दोषाभावो नावधार्यते[7], [8]न तावत् प्रामाण्यं निष्पाद्यत इति ।

तदसत् । न हि दोषाभावज्ञानं प्रामाण्यं निष्पादयति । निर्दोषज्ञानकारणादेव[9] तदुत्पत्तेः । न च निर्दोषत्वाय [10]आप्तत्वादिगुणनिश्चयः[11]; सत्तामात्रेण तत्सिद्धेः[12] । यथाऽऽह वार्तिककारः—

*'तदा न व्याप्रियन्ते तु ज्ञाय[13]मानतया गुणाः ।' इति ।

दोषाभावज्ञानेऽपि गुणानां सत्तयोपयोगो दर्शितः—

†'दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः ॥' इति ।

न चोत्पन्नमपि प्रामाण्यं[14] हानोपादानादि[15]व्यवहाराय अपर[16]मपेक्षते । स्मरणाभिलाषाभ्यामेव तत्सिद्धेः । यथाऽऽहुः[17]—

‡'स्मरणाद[18]भिलाषाच्च व्यवहारः प्रवर्तते ।' इति ।

अपि च, स्वतःप्राप्त[19]प्रामाण्यानां वेदानामपि यावत् कर्त्रभाव[20]निश्चयपुरस्सरं दोषाभावो नावधार्यते, न तावत् प्रामाण्यं प्रतितिष्ठतीति[21] समानं सापेक्षत्वम् ।

---

[1] $M_6$—अथोच्यते
[2] $M_1$, $M_2$, $M_4$, $M_7$, B—°शास्त्राणाम्
[3] $M_1$ reads स्वतः प्रामाण्यं निष्पादयति
[4] $M_3$ omits यावत्
[5] $M_4$ omits तत्
[6] $M_6$ adds त्व
[7] My—अनवधार्यते
[8] $M_4$, B omit न
[9] $M_1$, My—°करणादेव
[10] $M_2$, My—अप्राप्तत्वादि°
[11] PM—न च निर्दोषत्वादिगुणनिश्चयः
[12] $M_6$—तत्प्रसिद्धेः
[13] A—ज्ञान°; $M_2$—ज्ञानाय°
[14] All but My—प्रमाणम्
[15] $M_3$—भानोपादानादि°
$M_6$—हानोपानादि°
[16] $M_1$—परम्°
[17] $M_3$ omits यथाहुः
[18] B omits द, spoiling metre.
[19] $M_2$, $M_4$, $M_7$ & B, omit प्राप्त
[20] All mss. and printed texts read °कर्तृभाव°
[21] $M_4$ & B—प्रतिष्ठतीति

---

* *Ślokavārtika* under I.i.2, śl. 67a.
† *Ibid.* 67b.
‡ To be identified.

अथ योग्यानुपलम्भादेवानायाससिद्धे वक्त्रभावे[1], निराश्रयदोषाणामसम्भवात्[2] अप्रामाण्यशङ्कैव वेदे[3] नास्तीति चेत्; यथाऽऽहुः—

*‘ तत्रापवाद[4]निर्मुक्तिः वक्त्रभावात्[5] लघीयसी ।
वेदे, तेनाप्रमाणत्वं न शङ्कामधिगच्छति[6] ॥’ इति ;

†हन्त तर्हि पञ्चरात्रतन्त्रेऽपि सर्वज्ञसर्वेश्वर[7]वक्तृभावादेवायत्नसिद्धे दोषाभावे, अप्रामाण्यशङ्का नावतरतीति समानश्चर्चः ।

एतदुक्तं भवति—उभयोरपि स्वतःप्रामाण्ययोः एकत्र दोषाभावनिश्चयः[8] तदाश्रयपुरुषाभावनिश्चयात्, अन्यत्र तद्विरुद्धगुणवक्तृकत्व[9]निश्चयादिति । यथा औष्ण्याभावनिश्चयो नभसि तदाधारत्वाभाव[10]निश्चयात्, जले तु तद्विरुद्ध[11]शैत्योपलम्भादिति ।
किञ्च—

---

[1] $M_3$ reads वक्तृभावः; except PM, all ptd. texts and mss. have वक्तृभावे

[2] $M_1$, $M_2$, $M_4$, $M_7$, My—°अभावात्

[3] $M_6$, $V_1$ & A omit वेदे

[4] $M_6$—°वादात्°

[5] Except $M_6$, My and PM, all mss. and ptd. texts have वक्तृभावात्

[6] $M_1$—°अधितिष्ठति

[7] ‘B’ omits from वक्तृ upto गुण of the following para.

[8] $M_1$, $M_2$, $M_4$, $M_7$, My—दोषाभावः

[9] $M_1$, $M_2$, $M_4$, $M_7$, My—सर्वज्ञसर्वेश्वरवक्तृकत्व°

[10] All except $M_6$—तदाधाराभाव°

[11] $M_6$—तद्विरोधि°

---

* *Ślokavārtika* under I.i.2, śl. 68.

† The similarity of status between the Vedas and the Āgamas, according to Yāmuna, lies in the fact that both of them are understood to be free from the defects that generally stand in their way. The way in which this ‘faultlessness’ is understood, however, differs between the Vedas and the Āgamas. As regards the Vedic texts, there being no author (*apauruṣeya*), there is no question of any defect ever appearing at all. As regards the *Pañcarātrāgamas* too, there could be no question of any defect ever arising, on the ground that they are the direct utterances of Vāsudeva, the Omniscient Supreme Lord of the Universe. This is what Yāmuna explains in the succeeding para : “etaduktaṁ bhavati” *etc.*



सापेक्षनिरपेक्षत्वे न हि बाधस्य[1] कारणम् ।
शुक्तौ रजतबोधस्य निरपेक्षस्य बाधकम्[2] ॥

‘ नेदं रजत ’विज्ञानम्; तत् सापेक्षमपीष्यते[3] ।
‘ सेयं ज्वाले ’ति[4] संवित्तेः, तैलवर्तिविनाशजा ॥

अनुमा बाधिका[5] दृष्टा, सापेक्षाप्यक्षजन्मनः ।
अतो निरवकाशेन सावकाशो[6] निषिध्यते ॥

न चेह सावकाशत्वं भगवच्छास्त्रवेदयोः ।
अथ श्रुतिविरुद्धस्य तन्त्रभागस्य[7] दुश्शकम् ॥

वासुदेवप्रणीतत्वं निश्चेतुमिति मन्यसे ।
पञ्चरात्रविरुद्धस्य वेदभागस्य[8] वा कथम् ॥

अपौरुषेयताज्ञानमाविर्भवति बाधितम्[9] ?
तस्यापि वेदभागत्वात् तथाभावोऽभ्युपेयते[10] ॥

अस्यापि[11] पञ्चरात्रत्वात् तत्प्रणीतत्वमिष्यताम् ।
[12]कर्तुरस्मरणात्[13] तत्र यदि चापौरुषेयता ॥
तत्कर्तृकत्वस्मृत्यात्र किं न स्यात् तत्प्रणीतता ?

[ पञ्चरात्रस्य भगवत्कर्तृकत्वे प्रमाणोपन्यासः ]

अस्ति ह्यास्त्रीकुमारं सा दृढा[14] स्मृतिपरम्परा ॥
‘ पञ्चरात्रस्य निर्माता केशवो भगवानि ’ति ।
तत्प्रणीतत्वविश्वासात्[15] गजानश्वान् धनं बहु ॥

---

[1] PM—बोधस्य; $M_4$ has बाधकस्य and B has साधकस्य, both rendering the metre defective.

[2] T has a variant : साधकम्

[3] $M_2$—तत्त्वसापेक्षमुच्यते

[4] A, $M_2$, $M_4$, $M_5$, T, $V_1$,—ज्वालादि°

[5] $M_1$, $M_7$—अनुमा याधिका

[6] All except $M_6$—सावकाशं

[7] B—अथ श्रुतिविरुद्धस्यतन्त्रभागस्य

[8] $M_1$—वेदभङ्गस्य

[9] $M_5$—बाधकम्

[10] B—°अप्युपेयते

[11] $M_1$, $M_3$—तस्यापि

[12] $M_1$ omits this and the following line.

[13] My—अकर्तृस्मरणात्

[14] $M_1$—स्माद्दृढा

[15] $M_3$—°विश्वासाः

दक्षिणां विविधां दत्वा *प्रतिष्ठादीनि कुर्वते ।
§‘ सांख्यस्य कपिलो वक्ता, पञ्चरात्रस्य केशवः ’ ॥
इति[1] स्कन्द[2]पुराणेऽपि पठ्यते, †भारते तथा ।
$‘ पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ’ ॥
‡‘ इदं महोपनिषदं चतुर्वेदसमन्वितम् ।

---

[1] B omits इति      [2] $M_2$, My—स्कान्द°

---

* For *pratiṣṭhā*-rite, see *Sāttvatasaṁhitā* Ch. XXV and *Jayākhyasaṁhitā*, paṭala 16.

§ To be identified. See *Tantraśuddha*, p. 22, for the second half of this verse : ‘ वक्ता पञ्चपदार्थानां साक्षात् देवो महेश्वरः ॥ ’

*Cf. Mahābhārata*, XII. 337.60a :

‘ सांख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते ’ ।

† “ The Nārāyaṇīya section of the *Mahābhārata* ( XII. chs. 334-348 ) is valuable as it is the only fairly full account of the Pāñcarātra doctrines that we possess in original Sanskrit . . . . All the *bhakti*-writers from Rāmānuja down to the present day, assume the reader's familiarity with the principles inculcated therein ”. [ See G. A. Grierson, “ *The Nārāyaṇīya and the Bhāgavatas* ”, *The Indian Antiquary*, vol. 37, pp. 261-62. ]

$ *Mahābhārata*, XII. 337. 63a. Variant : वक्ता तु भगवान् स्वयम् । Also *cf. ibid.* śl. 63b-64a :

‘ सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥
यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः । ’

Quoting the line ‘ पञ्चरात्रस्य कृत्स्नस्य ’ etc. in his *Śrībhāṣya* II. ii. 42 ( p. 834 ), Rāmānuja says :

“ पञ्चरात्रतन्त्रस्य वक्ता नारायणः स्वयमेवेत्युक्तवान् । एवं वदतश्चायमाशयः । पौरुषेयाणां हि तन्त्राणां परस्परविरुद्धवस्तुवादितया, अपौरुषेयत्वेन निरस्तप्रमादादिनिखिलदोषगन्धवेदवेद्यवस्तुविरुद्धाभिधायित्वाच्च, यथावस्थितवस्तुनि प्रामाण्यं दुर्लभम् । वेदवेद्यश्च परब्रह्मभूतो नारायणः । अतः तत्तत्तन्त्राभिहितप्रधानपुरुषपशुपतिप्रभृतितत्त्वस्य वेदान्तवेद्यपरब्रह्मभूतनारायणात्मकतयैव वस्तुत्वमभ्युपगमनीयमिति । . . . . . .अतो वेदान्तवेद्यः परब्रह्मभूतो नारायणः स्वयमेव पञ्चरात्रस्य कृत्स्नस्य वक्तेति, तत्स्वरूपतदुपासनाभिधायि तत्तन्त्रमिति च तस्मिन्नितरतन्त्रसामान्यं न केनचिदुद्भावयितुं शक्यम् । ”

‡ *Mahābhārata*, XII. 326, 100-101.

Discussing the position of the Pañcarātra with reference to the Upaniṣads, Dr. D. L. De in his article “ *Pāñcarātra and the Upaniṣads* ” [ *Indian Historical Quarterly*, Vol. IX ], p. 648, says:



* सांख्ययोगकृतान्तेन †पञ्चरात्रानुशब्दितम्[1] ॥
§ नारायणमुखोद्गीतं[2] नारदोऽश्रावयन्मुनीन् ।
ब्रह्मणस्सदने तात ! यथादृष्टं यथाश्रुतम् ’ ॥

---

[1] $M_3$, $M_6$ add इति      [2] $M_1$, $M_2$, $M_4$, $M_7$, My, B—°मुखोद्गतम्
A—°मुखाद्गीतम्

---

“ The Upaniṣads, with no set theory of philosophy or dogmatic scheme of theology to propound, form the root of all the later religio-philosophic systems of the country ”.

“ It cannot be said definitely whether the Pāñcarātras confined themselves wholly to the contemporary Upaniṣads in the matter of borrowing. They borrowed probably from the contemporary Upaniṣads as well as from the pre-existing Upaniṣads. The Upaniṣads are the sources from which they drew most of their doctrines ”.

For a detailed account of these borrowings, see *ibid.*, pp. 648-660.

* See G.A. Grierson, *Indian Antiquary*, vol. 37, p. 261 :

“ Nearly the whole Mokṣadharma-parvan consists lectures on Sāṅkhya-Yoga, together with attempts to reconcile it with Brahmaism. One system which results from the attempted reconciliation of these two opposite philosophies is attributed to Pañcaśikha and is explained at some length . . . The Nārāyaṇīya, while claiming to describe Sāṅkhya-Yoga really describes the Bhāgavata monotheism as united with this system, but also with more of a Brahmaist colouring than we find in the Gītā. ”

† See *ibid.*, p. 258:

“ The Nārāyaṇīya sometimes alludes to the religion which it preaches as the doctrine of the Bhāgavatas, and sometimes as that of the Pāñcarātras. The two terms are not exactly synonymous, for the Pāñcarātras formed only one sect of the great Bhāgavata religion. Prof. R.G. Bhandarkar tells us that Dhruvasena I, one of the earliest princes of the Valabhi dynasty ( *C.* 530 A.D. ) is called a Bhāgavata, and Bāṇa ( *C.* 600 A.D. ) in the 8th chapter of the Harṣacarita mentions both the Bhāgavatas and the Pāñcarātras. ”

§ According to the Śāntiparvan of the *Mahābhārata* ( Gorakhpur edn. ), the *Sāttvata*-teaching is said to have been announced by the sun :

“ सात्त्वतं विधिमास्थाय प्राक् सूर्यमुखनिःसृतम् ।
पूजयामास देवेशं तच्छेषेण पितामहान् ॥ ”

See G.A. Grierson, *Indian Antiquary*, vol. 37, p. 253:

एवमादिपुराणोक्ति[1]सहस्रैः न्यायबृंहितैः ।
वासुदेवप्रणीतत्वं पञ्च[2]रात्रस्य निर्व्यथम्[3] ॥

किन्तु[4] वेदस्य नित्यत्वे विवदन्ते विपश्चितः ।
तेन निर्दोषविज्ञानकारणत्वात् द्वयोरपि ॥

निर्विशङ्कं प्रमाणत्वं भगवच्छास्त्रवेदयोः ।
ततश्च तुल्यशिष्टत्वात् विकल्पेन[5] प्रमाणता ॥

इति मत्वैतदाचष्ट[6] सूत्रकारो महामनाः[7] ॥

*' विज्ञानादिभावे वा[8] तदप्रतिषेधः ' इति ।

[ पञ्चरात्रे विप्रलम्भकत्वारोपनिरासः ]

ननु च[9] भगवतः सर्वज्ञत्वेनासम्भाव्यमानायामपि भ्रान्तौ, सर्वशक्तित्वेन विप्रलब्धमपि[10] भवतीति, किमिदमपि शास्त्रं व्यामोहयितुमभिहितम्[11] ? उत वस्तुतोऽवहितबुद्ध्या[12] निबद्धमिति अन्य-

[1] P, PM—°पुराणोक्तैः
[2] My—पाञ्च°
[3] $M_1$—निश्चितम्
[4] PM, $M_2$ to $M_7$, My, $V_1$, A—किन्नु
B—किन्न
[5] PM—विकल्पे न
[6] P, PM, $M_6$—°आचष्टे; $M_1$—मत्वेदमाचष्ट
[7] $M_1$—महात्मनाम्
[8] $M_2$—omits वा
[9] $M_2$ omits च
[10] $M_2$, My omit अपि
[11] $M_1$ reads only व्यामोहितम्
[12] A, $M_6$, $M_7$—°विहितं बुद्धा
$M_1$ to My, $V_1$, B—°अवहितं बुद्धा
$M_3$—°विहितं बुद्धौ
T—°अवहितं बुध्या

" We have no literary evidence as to the train of reasoning by which this doctrine ( Bhāgavata ) was reached, but to me it appears more than probable that it was a development of the Sun-worship that was the common heritage of both branches of the Aryan people—the Eranian and the Indian. All the legends dealing with the origins of the Bhāgavata religion are connected in some way or other, with the sun. "

See also in this connection, L.D. Barnett, "*The Hindu Gods and Heroes*," pp. 82-83.

* *Brahmasūtra* II. ii. 41.



तर[1]पक्षावलम्बनविक्लवमनसां क इव निर्णयोपायः ? प्रत्युत वेद-विरोधादेव[2] विप्लावन[3]फल[4]मित्य[5]ध्यवस्याम इति ।

तत्रोच्यते[6]—*" विप्रतिषेधात् ' इति । समस्त[7]श्रुतीतिहास-पुराणलोक[8]विप्रतिषेधात् । यदि विना कारणेन[9] भगवतः सर्वशक्तित्वमात्रात्[10] विप्लावनशङ्का[11]—

हन्तैवं सर्वशक्तित्वात् नरके धार्मिकानपि ।
पातयेन्नेति[12] सन्देहात् निश्चेष्टं जगदापतेत् ॥

अपि चायं सर्वशक्तित्वेन विप्रलिप्समानः किमती[13]न्द्रियासत्यार्थान् वेदानादौ[14] निर्माय स्वनिर्माणस्मरणशक्तिमपि हिरण्यगर्भादेरपहृत्य तत्प्रभृति स्वाध्याय[15]परम्परामिमां प्रवर्तितवान् न वेति संशयानाः[16] कथं विश्वसिमः ?

[17]अथास्य सत्यपि[18] सर्वशक्तित्वे, यावच्छक्ति करणे[19] प्रमाणाभावात्, अनवस्थानात्, भगवतश्च[20] स्वभावावाप्त[21]कामतया[22] विप्रलम्भप्रयोजनविरहात्, †वैषम्यनैर्घृण्यादिदोषैः मात्रयापि चासं-

[1] A omits तर
[2] A reads वेदविरोधाद्वेद°
$M_3$—वेदविरोध°
[3] P, PM, T, $M_1$, $M_2$, $M_3$, $M_5$, $M_6$, $M_7$, My, $V_1$, A—विप्लवन°
We have selected the reading of $M_4$ & B.
[4] $M_1$ omits फलम्
[5] $M_2$ omits इति
[6] $M_1$, $M_2$, $M_4$, $M_7$, My, B—अत्रोच्यते
[7] $M_2$ reads सर्व°
[8] $M_1$, $M_2$, $M_4$, $M_7$, My, B, omit लोक; $M_3$ reads योग for लोक
[9] $M_1$, $M_4$, $M_5$, $M_7$—करणेन
[10] $M_1$—सर्वशक्तिमात्रत्वात्
[11] A—विप्लवनशङ्का
$M_2$, My—विप्लावनाशङ्का
[12] $M_1$—पातयेन्नव°
[13] $M_3$, $M_4$, $M_6$, B—किमिति°
[14] $M_3$—वेदादौ
[15] P, T—तत्प्रभृतिस्वाध्याय ( one word )
PM—तत्प्रभृतिस्वाधाय
[16] A, B – संशयमानाः
[17] $M_4$ omits अथ
[18] $M_3$ – अस्त्यपि
[19] Printed texts have यावच्छक्तिकरणे as one word.
[20] $M_4$ adds स्वभावतश्च
[21] $M_1$—स्वभावावाप्ति°
$M_3$, $M_5$, $M_6$, $V_1$ & A—स्वभावाप्त°
[22] $M_3$, $M_6$—°कामयता

* *Brahmasūtra* II. ii. 42

† *Cf. ibid.* II. i. 34 :
" वैषम्यनैर्घृण्ये न, सापेक्षत्वात्, तथा हि दर्शयति । "

स्पृष्टत्वात्[1], सर्वप्राणिजातस्य[2] †स्वभावसौहृदेन व्यवस्थानात्, [3]विप्रलब्धुं प्रणीतत्वे च विदुषामद्ययावत् स्वाध्यायाध्ययनतदर्थानुष्ठानवतां त[4]त्कर्तृदोषविस्मरणानुपपत्तेः, तादृशा[5]शङ्का नास्तीति चेत्, तदेतत्सर्वमन्यत्रापि समानम्। तथा हि—

किमस्यावाप्तकामस्य सर्वज्ञस्य *दयानिधेः।
अल्पसत्त्वैरलब्धार्थैः विप्रलब्धैः§ प्रयोजनम्?
विप्रलब्धुं कृतं तन्त्रं[6] कथं वा परमर्षयः।
इतस्ततः प्रशंसन्ति तुल्यवत् श्रुतिमूर्धभिः?

[पञ्चरात्रस्य वेदसाम्यविषये भारतादिसूक्तिनिदर्शनम्]

तथा हि वेदैस्सह ×निर्विशेषं वाराह[7]रामायणभारतादौ।
अमुष्य तन्त्रस्य रहस्यभावं पठन्ति[8] सन्तस्तमिमं[9] वदामः॥
‡'वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज[10]।
प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षशतैरपि॥
पञ्चरात्रं[11] सहस्राणां यदि कश्चित् ग्रहीष्यति।
कर्मक्षये च मद्भक्तो[12] यदि कश्चित् भविष्यति॥

1 $M_2$, My—अस्पृष्टत्वात्
$M_4$, B, A—असंसृष्टत्वात्
2 $M_1$, $M_2$, $M_7$, My & B, omit स्व
3 $M_3$ omits वि
4 $M_2$, $M_3$, A, $V_1$ & B omit तत्
5 $M_3$, $M_4$ & A—°शङ्का
6 $M_3$—तत्र
7 T, $M_3$, $M_5$, $V_1$—वराह°
8 P, PM—वदन्ति
9 $M_3$, $M_6$—तमिदम्
10 $M_7$—द्विजः
11 $M_1$—पञ्चरात्र°
12 P, PM alone have मद्भक्तः। The rest read तद्भक्तः।

† *Cf. Śvetāśvatara* III. 17:
"सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत्॥"

* See G.A. Grierson, *Indian Antiquary*, vol. 37, p. 260:
"India again owes the preservation of the idea of a God of Grace, of the Fatherhood of God, to the Bhāgavatas."

§ 'प्राणिभिः' इति विशेष्यमध्याहार्यम्।

× 'निर्विशेषं' समानमित्यर्थः।

‡ *Varāhapurāṇa* Ch. 66. śls. 19, 14, 15a, 18a.



तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति।
यदिदं[1] पञ्चरात्रं मे शास्त्रं परमदुर्लभम्'॥
*'तद्भवान्[2] वेत्स्यते[3] सर्वं मत्प्रसादादसंशयम्[4]'॥
†'पुराणैश्चैव वेदैश्च पञ्चरात्रैः तथैव च।
ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति तम्'॥
'एवमेकं सांख्ययोगं §वेदारण्यकमेव च।
परस्पराङ्गान्येतानि पञ्चरात्रं च सत्तम[5]॥ ‡

1 $M_1$—यदि तम्; $M_6$—यदद्य
2 $M_2$—तत्सारान्
3 $M_1$, $M_4$, A—वेत्स्यसे; $M_2$—वेत्सि ते
4 $M_1$, A—°असंशयः
5 $M_4$, B—सत्तमाः

* *Varāhapurāṇa* Ch. 66. śl. 18b.
Also *Cf. ibid.* śl. 11b:
"अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वा॥"

† *Rāmāyaṇa* [uttara] Ch. X (Prakṣipta) [M .L. J. Press], p. 1012. The reading found is:
"यजन्ति पञ्चभिर्यज्ञैः सततं मधुसूदनम्॥" [61b]
"यः पुराणे च वेदे च पञ्चरात्रे च पठ्यते॥" [62b]

§ See Amarnath Ray, "*Śrīkṛṣṇa and the source of the Bhagavadgītā*," *Indian Historical Quarterly*, Vol. IX, pp. 193-194:

"Kṛṣṇa was the great religious teacher who brought about a Sāṁkhya-Yoga-Vedānta synthesis....The first book which is fragmentary might have been a remnant of the Āraṇyaka of the Sāttvatas, spoken of in the Nārāyaṇīya account of the Mahābhārata [XII. 348. 31]. When the doctrines of *bhakti* and *avatāra* and desireless action were adopted by Kṛṣṇa's followers, they were called Bhāgavatas."

For a detailed account of the alliance between Pañcarātra and Sāṅkhya-Yoga and their influences and counter-influences, see G.A. Grierson, '*The Nārāyaṇīya and the Bhāgavatas*', *The Indian Antiquary*, Vol. 37, pp. 255-258.

‡ *Mahābhārata* XII. 336. 76.
*Cf. ibid.*, Ch. 337. śl. 1:
"sāṅkhyaṁ yogaṁ pāñcarātraṁ vedāraṇyakameva ca।
jñānānyetāni brahmarṣe lokeṣu pracaranti ha॥"
Also *cf. ibid.* śl. 59:
"sāṅkhyaṁ yogaḥ pāñcarātraṁ vedāḥ pāśupataṁ tathā।
jñānānyetāni rājarṣe viddhi nānāmatāni vai॥"

*‘ वेदेन[1] पञ्चरात्रेण यः पश्यति स पश्यति ’ ॥

†‘ इदं महोपनिषदं चतुर्वेदसमन्वितम् ’ ।
वचसामेवमादीनामानन्त्यादुपरम्यते ॥

इत्थंभूतस्य तन्त्रस्य विप्लवं यदि शङ्कसे ।
सर्वत्र स्यादनाश्वास इत्येतदुपदिश्यते‡ ॥—

§‘ विप्रतिषेधात् ’ इति । एवं च—

विरोधेऽपि[2] विकल्पस्स्यात् भगवच्छास्त्रवेदयोः[3] ।
विरोध एव नास्तीति प्रागेव प्रत्यपादयम् ॥

[1] A—वेदैश्च

[2] $M_3$ omits अपि, and the metre falls short of one syllable.

[3] $M_4$—°देवयोः

Commenting upon the verse “evamekam” in his *Śrībhāṣya* under II. ii. 39 (p. 834), Rāmānuja says:

“ सांख्यं च योगश्च सांख्ययोगम् । वेदाश्चारण्यकानि च वेदारण्यकम् । परस्पराङ्गान्येतानि, एकतत्त्वप्रतिपादनपरतयैकीभूतानि; एकं पञ्चरात्रमिति कथ्यते । एतदुक्तं भवति—सांख्योक्तानि पञ्चविंशतितत्त्वानि । योगोक्तं च यमनियमाद्यात्मकं योगम् । वेदोदितकर्मस्वरूपाण्यङ्गीकृत्य तत्त्वानां ब्रह्मात्मकत्वं, योगस्य च ब्रह्मोपासनप्रकारत्वं कर्मणां च तदाराधनरूपतामभिदधति । कर्मस्वरूपं प्रतिपादयन्त्यारण्यकानि । एतदेव परेण ब्रह्मणा नारायणेन स्वयमेव पञ्चरात्रतन्त्रे विशदीकृतमिति । शारीरके च सांख्योक्ततत्त्वानामब्रह्मात्मकतामात्रं निराकृतम्, न स्वरूपम् । योगपाशुपतयोश्च ईश्वरस्य केवलनिमित्तकारणता, परावरतत्त्वविपरीतकल्पना, वेदबहिष्कृताचारो निराकृतः ; न योगस्वरूपं, पशुपतिस्वरूपं च । अतः ‘ सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ’ इति तत्तदभिहिततत्तत्स्वरूपमात्रमङ्गीकार्यम् । जिनसुगताभिहिततत्त्ववत् सर्वं न बहिष्कार्यमित्युच्यते । ‘यथागमं यथान्यायं निष्ठा नारायणः प्रभुरि’त्यनेनैकार्थ्यात् ।”

Also see Collected Works of Sir R. G. Bhandarkar (Bhandarkar Oriental Research Institute, 1933), Vol. I, pp. 248-294 for an article *‘The Rāmānujīya and the Bhāgavata or Pāñcarātra systems’*.

* To be identified.

† *Mahābhārata* XII. 326. 100a.

‡ पञ्चरात्रस्य परमप्रमाणभूतस्यापि विप्लावनशङ्कायां सर्वत्रापि अप्रामाण्यबुध्द्या अनाश्वास एव भवेत् । विप्रतिषेधश्च स्याद्वैदिकलौकिकव्यवहाराणामिति सूत्रार्थं समुच्चिनोति ‘ सर्वत्र स्यादनाश्वास ’ इत्यनेन । ‘ विप्रतिषेधात् इति ’ इत्येतत्पर्यन्तमेकं वाक्यम् ।

§ *Brahmasūtra* II. ii. 42.



[ विरुद्धांशाप्रामाण्यवचननिर्वाहः ]

*नन्वत्रभवतां भाष्यकाराणां विरुद्धांशाप्रामाण्याभिधानं[1] कथमिव ?

यद्यपि विरोधः कृत्वाचिन्तया परिहृतः[2], तदपि गम्भीरन्याय[3]सागरमवगाढुमपरिबृढानां[4] कोमलमनसां वेदानादरो मा भूदित्येवंपरम्[5] । †यथैव हि भगवतो जैमिनेः कर्मफलोपन्यासः[6] कर्मश्रद्धासंवर्धनायेति ।

[ पञ्चरात्रस्य वेदबाह्यगृहीतिमूलकाप्रामाण्यारोपखण्डनम् ]

§वेदबाह्यगृहीतत्वादप्रामाण्यमवादि यत् ।
एतद्बाह्यगृहीतत्वात् वेदानां वा कुतो न तत् ?

अपि च[7]—

किं चेदं वेदबाह्यत्वं ? का वा स्यात् तद्गृ[8]हीतता ?
किमङ्ग ! वेदादन्यत्वं वेदबाह्यत्वमुच्यते ॥

[1] $M_1$ reads विरुद्धांशाप्रामाण्यांशयोः

[2] $M_3$—अपहृतः

[3] $M_1$ omits न्याय

[4] $M_2$, My—परिबृढानां; $M_3$, $M_6$—परिदृढानाम्; PM—अपरिवृद्धानाम्

[5] $M_3$ reads °अपरम् ; ‘ T ’ reads °वरम्

[6] *Tātparyaṭīkā* of Vedānta Deśika (Kanchi edn.), which quotes this line, has a variant : कर्मणः फलोपन्यासः

[7] $M_3$, $M_4$ omit अपि च

[8] $M_4$ omits तत्, to the detriment of metre.

* This reference by Yāmuna to ‘ bhāṣyakāra ’ has been taken by some Vaiṣṇava scholars as speaking of Dramiḍabhāṣyakāra, who is traditionally said to have commented upon the *Brahmasūtra.* But this may be taken as a reference to Śaṅkara himself. Rāmānuja’s *Śrībhāṣya* also seems to support this position. *Cf. Śrībhāṣya* under II. ii. 42, p. 832 :

“ यत्तु परैः सूत्रचतुष्टयं कस्यचिद्विरुद्धांशस्य प्रामाण्यनिषेधपरं व्याख्यातम् ”, with the above passage : “ नन्वत्रभवतां ” etc. Also *cf.* Śaṅkara on the above *sūtra*, p. 259 :

“ यद्यप्येवंजातीयकोंऽशः समानत्वात् न विसंवादगोचरो भवति । अस्ति तु अंशान्तरं विसंवादस्थानमित्यतः तत्प्रत्याख्यानायारम्भः ” etc.

† *Cf. Vedārthasaṅgraha*, p. 157 :

“ अश्रुतवेदान्तानां कर्मणि अश्रद्धा मा भूदिति देवताधिकरणे अतिवादाः कृताः, कर्ममात्रे यथा श्रद्धा स्यादिति ” ।

§ See the verse ‘ विवादाध्यासितं ’ etc., p. 17 above.

तन्निषिद्धार्थ[1]कारित्वम्[2] ? आहो तद्द्वेषशीलता ?

तथा—

गृहीतत्वमधीतत्वं ज्ञातत्वं वा विचार्यताम् ।
क्रियमाणार्थता वा स्यात्, हेतुस्सर्वत्र दुष्यति[3] ॥

तत्र तावत्—

यदि वेदाद् विभिन्नत्वं बाह्यत्वं, साऽप्यधीतता[4] ।
वेदादन्यैः त्रिभिर्वर्णैः[5] अधीतं[6] वैदिकं वचः ॥

प्रमाणमित्यनैकान्त्यं हेतोस्तत्र प्रसज्यते[7] ।
ज्ञातत्वेऽपि गृहीतत्वे, दोषादस्मान्न मुच्यसे[8] ॥

पूर्वोक्तं वेदबाह्यत्वं क्रियमाणार्थता यदि ।
गृहीततापि[9], वेदैस्स्यात् तथैव व्यभिचारिता ॥

प्रतिषिद्धार्थकर्तृत्वे वेदबाह्यत्वलक्षणे[10] ।
व्यभिचारः त्रयीवाक्यैः प्रायश्चित्तविधायकैः ॥

प्रायश्चित्तविधायकानि वाक्यानि[11] *'कूष्माण्डैः जुहुयात्' इत्यादीनि प्रतिषिद्धकारिभिरधीतगृहीतानुष्ठीयमानार्थत्वेन[12] प्रमाणानीति[13] तादृशवेदबाह्यगृहीतत्वमनैकान्तिकम् ।

---

1 'A' has तन्निषेधार्थ°
2 $M_3$ reads °कामत्वम्°
3 $M_1$—दूष्यते
4 PM reads वाप्यधीतता
5 $M_3$—°सर्वैः
6 $M_3$ reads अधिकम्
7 $M_1$, $M_3$—प्रयुज्यते
8 $M_1$, $M_2$, $M_4$, $M_7$, My, B, PM—मुच्यते
9 $M_1$—गृहीतता च
10 $M_6$ - °लक्षिते
11 $M_1$, $M_2$, $M_4$, $M_7$, My & B omit वाक्यानि
12 A—°अनुमीयमानार्थान्येव; T, $M_1$, $M_2$, $M_5$, $M_6$, $M_7$, My, B—°अनुष्ठीयमानार्थान्येव; $M_3$—°अनुष्ठायमानार्थान्येव
13 $M_4$—प्रामाण्यानीति

---

* *Cf. Bodhāyanadharmasūtra*, III. vii. 1:
'कूश्माण्डैर्जुहुयात् योऽपूत इव मन्येत' ।



†नापि वेदद्वेषि[1]जनपरिगृहीतत्वादप्रामाण्यं पञ्च[2]रात्रतन्त्राणाम् । हेतोरसिद्धत्वात् । अपि च न[3] वेदद्वेषिजनपरिग्रहः प्रामाण्यं प्रतिहन्ति । यदि हि प्रतिहन्यात्, निरर्गलस्तर्हि नास्तिकानां[4] पन्थाः । ते हि वेदप्रामाण्यप्रोत्सादनाय प्रयस्यन्तः—

*कथंचित् वेदवाक्यानि गृहीत्वा विप्रलम्भनात् ।
अनायासेन[5] मिथ्यार्थान् वेदान् कुर्युर्दिगम्बराः ॥

अथ तत्रा[6]नधिकारिणामध्येतॄणामेव ††'न चाभिव्याहरेद्ब्रह्म स्वधानिनयनादृते' इत्यादि[7]वचन[8]पर्यालोचनया दोषः, न निर्दोषवेदवाक्यानामिति चेत्, तत्[9] प्रस्तुततन्त्रेष्वनधिकारि[10]श्रोतृजनानामेव दोषः न निर्दोषतन्त्राणामिति, सर्वं समानमन्यत्राभिनिवेशात् ।

अथ मतं वेदबाह्यत्वं नाम वैदिककर्मानधिकारित्वं, तदनधिकारिभिः वेदबाह्यैः गृहीतत्वात् §चैत्यवन्दनवाक्यवदप्रमाणमिति;

---

1 $M_2$, $M_3$, $M_4$, My, A—वेदविद्वेषि°
2 My— पाञ्च°
3 A omits न
4 $M_3$—निरर्गलस्तन्नास्तिकानां
5 $M_3$—अनाथान्येव
6 B—अत्र°
7 $M_1$—इत्येवमादि°
8 $M_3$ omits वचन
9 $M_1$ & $M_7$ omit तत्
10 $M_3$—°तन्त्रेष्वध्ययनाधिकारि°

---

† The argument here is that the handling of Vedic texts by the unorthodox people like the Buddhists and the Jains, cannot bring down the authoritative character of those texts. Otherwise, the Vedas would long ago, have become invalid since the unorthodox schools of thought tried to explain the Vedic passages as they pleased contradicting their original significance. The authority of the Vedas is for all time to come and the wrong handling of those texts by others cannot undermine it.

* *Cf. Tantravārtika* I. iii. 3, p. 85:
'लोकायतिकमूर्खाणां नैवान्यत् कर्म विद्यते ।
यावत् किञ्चिददृष्टार्थं तत् दृष्टार्थं हि कुर्वते ॥'

†† *Manusmṛti* II. 172a. The reading found is: 'नाभिव्याहारयेत्' etc. A similar statement is found in the *Gautama Dharmasūtra* II. 9: 'न ब्रह्माभिव्याहारयेत्' &c.

§ Bhaṭṭa Medhātithi, commenting upon *Manusmṛti* XII. 95, quotes from some unidentified source:
'नोदनाः चैत्यवन्दनतः स्वर्गो भवति ।'

तत्राऽपि, किमखिलवैदिककर्मानधिकारिजन[1]परिगृहीतत्वं हेतुः ? उत कतिपयवैदिककर्मानधिकारिजन[2]परिगृहीतत्वम्[3] ? इति विविच्य व्याचष्टाम्[4] ।

न तावदग्रिमः कल्पः[5] कल्पते हेत्वसिद्धितः ।
न हि सोऽस्ति मनुष्येषु यः श्रौते क्वपि[6] कर्मणि ॥
नाऽधिकुर्यादहिंसादौ नृमात्रस्याधिकारतः ।

अन्यथा हि ब्राह्मणहननतद्धनापहरणवर्णाङ्गनासङ्गमवेदाध्ययनादि कुर्वाणाः चण्डालादयो न दुष्येयुः, तदनधिकारित्वात्[7] । *यस्य हि यन्न कर्तव्यं, तस्य हि तत्करणं[8] प्रत्यवायाय। अतस्सर्वेषामीदृशवैदिक[9]कर्मण्यधिकारो विद्यत एवेत्यसिद्धो हेतुः ।

साधनविकलश्च[10] दृष्टान्तः। नाऽपि कतिपयवैदिककर्मा[11]नधिकारिभिः[12] गृहीतत्वादप्रामाण्यं, समस्तवेदवाक्यानामप्रामाण्यप्रसङ्गात् । अस्ति हि सर्वेषां कतिपयवैदिक[13]कर्मानधिकारः—ब्राह्मणस्येव

[1] $M_1$ omits जन

[2] All except $M_6$ omit जन. We chose the reading of $M_6$.

[3] P, PM, T, A, $M_3$, $M_5$, $M_6$, My, $V_1$ omit परि; $M_1$ has a lacuna from हेतुः upto परिगृहीतत्वम् ।

[4] $M_1$—आचष्ट; $M_2$, $M_4$, $M_7$, My—आचष्टाम्

[5] $M_5$ omits कल्पः, to the detriment of metre; $M_3$ & B have अग्रिमकल्पः.

[6] $M_1$, $M_7$—वाऽपि

[7] $M_1$—तदनधिकारत्वात्

[8] $M_1$—तत्कारणम्

[9] $M_2$ & My omit वैदिक

[10] $M_1$—°विकल्पश्च

[11] $M_1$—°धर्म°

[12] $M_4$—°कर्मानधिकारि°

[13] B omits वैदिक

* *Vide Karmamīmāṁsā*, p. 93 :

" While an injunction directs a positive act, a prohibition ( *niṣedha* or *pratiṣedha* ) serves to turn a man away from performing the action expressed in the verb and its object. The prohibition does not lead to any desirable result such as heaven; it serves none the less a useful purpose; the man, who obeys the direction not to eat the mysterious *kalañja*, by observing this taboo escapes the hell which else had been his fate. In the technical phraseology of Mīmāṁsā, the negative applies not to the sense of the verb, but to the optative affix; as an optative urges us to action, so a negatived optative turns away from it. "



[1]राजसूये, राजन्यस्येव[2] सोमपाने । अतो व्यवस्थितवर्णाधिकारिगृहीतवेदवचनैः अनैकान्तिको हेतुः । *अप्रयोजकश्च—

'चैत्यवन्दनतः स्वर्गो भवती'तीदृशी मतिः ।
न तत्परिग्रहान्मिथ्या, किन्तु कारणदोषतः ॥

[ पञ्चरात्रस्य वैदिकपरिग्रहशिष्टानुष्ठानदर्शनकथनम् ]

†उक्तश्च वैदिकसमस्तास्तिकप्रवरभृगुभरद्वाजद्वैपायनप्रभृतिमहर्षिजनपरिग्रहः[3] । अद्यत्वेऽपि हि पञ्चरात्रतन्त्रविहितमार्गेण §प्रासाद[4]करणप्रतिमा[5]प्रतिष्ठापनप्रणामप्रदक्षिणोत्सवादीनि प्रत्यक्ष-

[1] $M_1$, $M_7$,—ब्राह्मणस्यैव

[2] $M_1$, $M_2$, $M_7$, B—क्षत्रियस्यैव
$M_4$, My—क्षत्रियस्येव

[3] $M_3$—°परिग्रहणम्

[4] A—प्रसाद°

[5] $M_3$ omits प्रतिमा

* अप्रयोजकत्वमेव प्रतिपादयति 'चैत्यवन्दनतः' इत्यादिना ।

† See G.A. Grierson, " *The Nārāyaṇīya and the Bhāgavatas* ", *Indian Antiquary* Vol. 37, p. 254 :

" The usual tradition is that it ( the Bhāgavata doctrine ) was transmitted : Deity—Nārada—saints including the Sun—Ṛṣis in his train—gods—Asita—to the world in different channels. Modern Bhāgavatas recognise two great teachers of their religion. One is Nārada, to whom is attributed *Nāradīya Bhaktisūtra*. Equally esteemed is the collection of *Śāṇḍilyabhakti-sūtras*. The author to whom it is attributed, composed the Śāṇḍilyavidyā quoted in the Chāndogya Upaniṣad III. xiv. 3. "

See also p. 9 above, fn †

§ For a detailed account of temple-construction according to *Pañcarātra*-texts, see *Agastyasaṁhitā* 1-106; *Ahirbudhnya Saṁhitā* XXXVI. 31-49; *Īśvarasaṁhitā* XVI. 1, 219-247; 266-287; *Kapiñjalasaṁhitā* X. 61-66; 69-72; *Jayākhyasaṁhitā* XX. 73ff; *Pādma* 'kriyā' IV. 24-28, 35-45; V. 84-90; VIII; *Pārameśvara* X. 2-106; *Pauṣkara* XL. 92-109a, XLII. 71-118; *Viṣṇutilaka* VI. 1-342a, 449-498; *Sanatkumāra* 'Brahma' VIII; *Sāttvata* XXIV. 280-432a, XXV. 1-375; *Hayaśīrṣa* 'Ādi'. XIII. 1-41; XXXVIII. 61; XLIV. 12-19.

For the installation of images, see *Aniruddha* XV, XXXIII, XXXIV; *Īśvara* XVI. 228-352, XVIII. 1-560; *Jayākhya* XX. 131b ff; *Parama* XVIII. 28-75; *Pauṣkara* XXXVIII. 1ff, 15-46; *Sanatkumāra* " Brahma " VI. 110 *passim*, IX. *passim*; *Sāttvata* XXV. 307ff; 320ff; XXVI. 375.

श्रुतिविहिताग्निहोत्रादिवत् श्रेयस्करतर[1]बुद्ध्याऽनुतिष्ठतः[2] शिष्टान् पश्यामः । न चैतदाचरणं[3] निर्मूलमिति युक्तम् । सन्ध्यावन्दनाष्टकाचरणादेरपि निर्मूलत्वप्रसङ्गात् । उक्तं च शिष्टाचारस्य[4] प्रामाण्यम्—*'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' इति ।

[ पञ्चरात्रस्य भागवतपरिग्रहमूलकाप्रामाण्यारोपखण्डनम् ]

†अथ भागवतजनपरिगृहीतत्वादिति हेतुः, हन्त तर्हि त[5]त्परिगृहीतत्वात् §वाजसनेयकैकायनशाखावचसां प्रत्यक्षादीनां च अप्रामाण्यप्रसङ्गः ।

अथ त्रैरेव[6] परिगृहीतत्वादिति[7] हेतुः, तदसाधारणानैकान्तिकम्; असिद्धं च । किमिति वा[8] तत्परिग्रहादप्रामाण्यम्? अत्रैवर्णिकत्वादिति[9] चेत्, किं भोः त्रैवर्णिकेतरसवर्ण[10]रथकारनिषादादि[11]परिगृहीतानुष्ठीयमानार्थानामाथर्वण[12]वचसां $'रथकार आदधीत', ‡'एतया निषादस्थपतिं याजयेत्' इत्यादिवचसां प्रामाण्यं नास्ति?

[1] $M_2$ omits तर; $M_3$—श्रेयस्करता°
[2] $M_3$—नितिष्ठत:
[3] $M_6$—न चेत्तदाचरणम्
[4] $M_1$, $M_7$ omits स्य
[5] $M_3$ omits तत्
[6] $M_5$—एतैरेव
[7] $M_6$—परिगृहीतत्वादि
[8] A omits वा
[9] $M_3$—अत्रैव वर्णितत्वादिति
[10] $M_1$, $M_2$, $M_4$, $M_7$, My—°स्वर्ण°
[11] $M_4$—°निषदादि°
[12] $M_1$, $M_7$—°अथर्वण°; $M_3$—°अनुष्ठीयमानाथर्वण°

For a description of *Utsavas*, which are as many as fifty in number, see *Agastya* V. 1-2; *Aniruddha* XVII. 9-16a, XX. 1-16, XXIV, XXV. 1-4, XXVII; *Īśvara* X. 4a-10, XII. 1-233a, XIII. 1-265a, XIX. 469-473; *Kapiñjala* XXII. 3-5, 8-9; XXIII. 1-84a, XXIV. 1-69a; *Pādma* "caryā" X. 6-23, XI. 1-292, XIV. 1-85; *Pārameśvara* XVI. 1-55, XVII. 1-550, *Śāṇḍilya* I, XV. 1-126; *Śrīpraśna* XXX. 79-87; *Sanatkumāra* "Śiva" IX.

For the annual festival called *Mahotsava*, see *Aniruddha* XXI. 1-112; *Īśvara* X; *Pādma* "car" XI; *Śrīpraśna* XXXI. 8, XXXVIII.

* *Pūrvamīmāṁsā* I. iii. 7.

† See p. 17 above, "एवं जात्या" &c.

§ The Ekāyanaśākhā belongs to the Śukla Yajurveda.

$ *Cf. Āpastambaśrautasūtra* V. 3.19.

‡ *Maitrāyaṇī Saṁhitā* [ed. Dr. Leopold V. Schroeder] II. 2.4. The reading found is : "तया निषादस्थपतिं याजयेत् सा हि तस्येष्टिः" । For the Niṣādasthapatinyāya see Śabara on *Pūrvamīmāṁsā* VI. i. 51, 52.



[ भागवतानामुत्कृष्टब्राह्मण्यसमर्थनम् ]

अस्तु वा अत्रैवर्णिक[1]परिग्रहः अप्रामाण्यहेतुः । §एतेषां तु भगवच्छास्त्रानुगामिनां भागवतानामुत्कृष्टब्राह्मण्यं सर्वप्रमाणसमवगतमिति तत्परिग्रहः[2] प्रामाण्यमेव द्रढयति ।

[ जातेः प्रत्यक्षत्वनिरूपणम् ]

आह[3]—केन पुनः प्रमाणेन एषां ब्राह्मण्यमवगतम्? केन वाऽन्येषाम्?

ननु चक्षुर्विस्फारणसमनन्तरं[4] शिखायज्ञोपवीतपालाश[5]दण्ड[6]मौञ्जी[7]युजो द्विजकुमारकान् पश्यन्तो ब्राह्मणा इत्यवगच्छन्ति ।

इह वा किम[8]हरहरधीयमानवाजसनेयकैकायनशाखान् विलसदुपवीतोत्तरीयशिखाशालिनोऽध्यापयतः, याजयतः, प्रतिगृह्णतो विदुषः पश्यन्तो ब्राह्मणा इति नावयन्ति[9]?

अथ याजनप्रवचनपालाश[10]दण्डादीनां दुष्टशूद्रादिषु व्यभिचारसम्भवात् ब्राह्मण्यसिद्धवत्कारेण प्रवृत्तेश्च न तेभ्यो ब्राह्मण्य[11]निर्णयः[12], तद्भागवतेतरविप्राणामपि समानम्[13] ।

अथ सत्यपि तेषां क्वचिद्व्यभिचारे, तत्सामान्यादन्यत्र[14] व्यभिचारशङ्कायां, शुक्तौ रजतधियो व्यभिचारात्, रजते रजत-

[1] $M_3$—अत्र त्रैवर्णिक°
[2] $M_3$ & $M_6$ read तत्परिग्रह, omitting the *visarga*.
[3] $M_2$—अथ
[4] $M_1$—°अनन्तरम्
[5] $M_1$, $M_2$, $M_4$, $M_7$, My, B—°पलाश°
[6] $M_6$—पालाशदण्डौ°
[7] My—°मुञ्जी°
[8] $M_1$, $M_2$, $M_4$, $M_7$, My, B omit किम्
[9] $M_2$, $M_6$—नावगच्छन्ति
[10] PM, $M_6$, B—°पलाश°
[11] $M_3$—°ब्राह्मण्ये°
[12] A reads निश्चय:
[13] T records a variant साधकम्
[14] A—°अत्र

§ For a detailed notice of the origination, transformation and philosophy of the *Bhāgavata* religion and its contribution to the Indian thought, see G. A. Grierson, "*The Nārāyaṇīya and the Bhāgavatas*", *Indian Antiquary*, Vol. 37, pp. 251-262.

धियां[1] व्यभिचारशङ्कावत्, प्रत्यक्षविरोधात्, अनवस्थानाच्च[2], अनुपलभ्यमानव्यभिचारोदाहरणेषु[3] तथात्वनिश्चयः, तदन्यत्रापि समानम् ।

अथ मतम्—अन्येषां ब्राह्मण्यं तदसाधारणगोत्रस्मरणादिति, तद्भागवतानामपि समानम् । स्मरन्ति हि भागवताः—'वयं भारद्वाजाः[4], वयं काश्यपाः, वयं गौतमाः, वयमौपगवा[5]' इति । न चेदं गोत्रस्मरणं निर्मूलं सामयिकं[6] वा; सर्वगोत्रस्मरणानां तथाभाव[7]-प्रसङ्गात् ।

सम्भाव्यमानदोषत्वात् वंशानां, यदि संशयः ।
तद्ब्राह्मण्ये, ततो लोकं सर्वं व्याकुलयेदयम् ॥

तथा हि—

जननीजारसन्देह[8]जात[9]चण्डालसंशयः ।*
निर्विशङ्कः[10] कथं वेदानधीषे[11] साधु सत्तम[12] ? ॥

तेन भागवतानामपि[13] अविच्छिन्न[14]परम्पराप्राप्तविचित्रगोत्र-स्मरणपर्यवस्थापितं ब्राह्मण्यमनपोदितमास्त इति न भागवतानाम-न्येषां च ब्राह्मण्ये कश्चिद्विशेषः । यदि परं, ते[15] परमपुरुषमेवाश्रिता एकान्तिनः, अन्ये क्षुद्रदैवतकाः[16] साधारणा इति ।

---

1 $M_6$—रजतधिया
2 My reads प्रत्यक्षविरोधानवस्थानाच्च
3 $M_1$, $M_2$, $M_4$, $M_7$, My, B, omit षु
4 My—भरद्वाजाः
5 $M_1$ omits वयमौपगवाः
6 $M_2$, My—समाधिकम्
7 A omits भाव
8 $M_6$—°सन्देहात्
9 P, PM—°जातः
10 $M_3$—निर्विशङ्कम्
11 P, PM—वेदमधीषे; $M_1$—वेदानधीते
12 PM, T—साधुसत्तम
$M_1$, $M_4$, $M_7$, B—°सत्तमः
13 P & PM omit अपि
14 A—अविभिन्न°; $M_3$—अव्यवच्छिन्न°
15 $M_4$ & B omit परं ते
16 All ptd. texts and mss. except $M_1$, $M_6$—दैवतिकाः; $M_1$—देवताकाः; We chose the reading of $M_6$.

---

* अयं बहुव्रीहिः 'त्वं' इत्यस्य अभ्याहृतस्य विशेषणम् ।



किं पुनरेतेषां ब्राह्मण्ये प्रमाणमभिहितम्[1] ?

*यदेवान्येषाम् ।

केन वा तेषां[2] ब्राह्मण्यमवगतम् ?

†किं न एतेन ? यदि च कौतूहलम्—

श्रूयतामुभयत्राऽपि ब्राह्मण्यस्या[3]वधारकम् ।
प्रत्यक्षं वाऽनुमानं वा यद्वार्थापत्तिरेव वा ॥

ननु कथं प्रत्यक्षं ब्राह्मण्यमवगमयति ? न हि प्रथमाक्ष[4]सन्निपातसमनन्तरमदृष्टपूर्वविप्रक्षत्रसमानवयोवेषपिण्डद्वय[5]सन्निधौ अजगजमहिषादि[6]विशेषवत् 'अयं ब्राह्मणः, अयं क्षत्रियः' इति विभागेन[7] प्रतिपद्यामहे ।

न च तत्पित्रादिब्राह्मण्यस्मरणसापेक्षमक्षमे[8]व सन्निहितव्यक्ति[9]वर्तिब्राह्मण्यमवगमयतीति साम्प्रतम् । तत्स्मरणस्यैव पूर्वानुभवविरहेण वन्ध्यासुतस्मरणवदनुपपत्तेः ।

न चानुमानात् । तत्प्र[10]तिबद्ध[11]लिङ्गादर्शनात् ।

न च शमदम[12]तपश्शौचादयो[13] ब्राह्मण्ये[14] लिङ्गम् । तेषां ब्राह्मणेन सता[15] सम्पाद्यत्वात्[16], व्यभिचाराच्च ।

---

1 $M_1$, $M_2$, $M_4$, $M_7$, My, & B omit अभिहितम्
2 B—एतेषाम्
3 A reads प्रामाण्यस्य°
4 $M_3$ & $M_6$ add र
5 'A' adds स्य
6 $M_3$ reads अजजगन्महिषादि°
7 $M_1$, $M_2$, $M_4$, $M_7$ & My read विशेषेण
8 $M_6$ omits अक्षम्
9 $M_4$ omits व्यक्ति
10 $M_1$, $M_2$, $M_4$, $M_7$, My & B omit तत
11 $M_3$, $M_6$—°प्रतिबन्ध°; A—°प्रतिलब्ध°
12 $M_2$ & My omit दम
13 $M_1$, $M_2$, $M_4$, $M_7$, My & B—°शौचादियोगः
14 $M_1$, $M_2$, $M_4$, My—ब्राह्मण्य°
15 $M_4$—सदा
16 My—सम्पाद्यमानत्वात्

---

* अन्येषां ब्राह्मणत्वेन प्रसिद्धानां ब्राह्मण्यग्रहणे यत्प्रमाणं, तदेव एतेषां भागवतानां ब्राह्मण्यग्रहणे प्रमाणं भवतीति ग्रन्थकृद्वचः ।

† अस्माकमेतेन विवादेन को लाभः ? तथापि श्रूयतामित्याह ।

न चार्थापत्त्या ब्राह्मण्यनिर्णयः, अनुपपत्त्यभावात् । न च $‘वसन्ते ब्राह्मणोऽग्निमा[1]दधीत’ इत्यादिवाक्यार्थानुपपत्त्या ब्राह्मण्य[2]निर्णयः, ब्राह्मण्यादि[3]पदार्थावगमपूर्वकत्वात् तद्वा[4]क्यार्थावगमस्य ।

नाऽयं दोषः[5] । न हि प्रथमाक्ष[6]सम्प्रयोगसमय एव भासमानं प्रत्यक्षं, नान्यदित्यस्ति[7] नियमः । यदेवेन्द्रिय[8]व्यापारानुवृत्तौ सत्यां[9] अपरोक्षमवभासते[10], तत् प्रत्यक्षम् । तथा च ब्राह्मण्यमिति तदपि प्रत्यक्षम् । प्रतीमो हि वयमुन्मीलित[11]लोचनाः, तत्सन्ततिविशेषानुसन्धानसमनन्तरं वासिष्ठ[12]काश्यपीयशठमर्षणप्रभृतिविचित्रगोत्रकुलशालिषु समाचारशुचिषु विलसदुपवीतोत्तरीयशिखा[13]मौञ्जीबन्धेषु स्फुटतरमनुसन्दधत् ब्राह्मण्यम् ।

न चैतदलौकिकम् , यत् सन्ततिविशेषानुसन्धानसापेक्षमक्षं[14] ब्राह्मण्यं ग्राहयतीति । *सर्वत्र देशकालसंस्थानादी[15]तिकर्तव्यतानुगृहीतमे[16]वेन्द्रियं स्वगोचर†परिच्छेदोत्पादे[17] करणं[18] भवति । §करणमात्रस्यायं स्वभावः, यदितिकर्तव्यतापेक्षणम् । यथाऽऽह[19]—

[1] All except $M_3$—°अग्नीन्
We have selected the reading of $M_3$
[2] $M_1$, $M_2$, $M_4$, $M_7$, My & B omit ब्राह्मण्य
[3] $M_2$, $M_7$, My, B—ब्राह्मणादि°
[4] ‘B’ omits तत्
[5] $M_2$ reads शेषः
[6] $M_3$ adds र
[7] $M_2$—नान्यदस्तीति
[8] PM—यदेवेन्द्रियम् ; $M_2$—यदेन्द्रिय°; $M_6$—यदेवेन्द्रिये
[9] $M_3$ & $M_6$—सत्यम्
[10] $M_1$, $M_2$, $M_4$, $M_7$, My, B—°भासते
[11] T, $V_1$, A—°उन्मूलित°
[12] PM and all mss. except My—वसिष्ठ°
[13] $M_6$—°शाखा°
[14] $M_2$, $M_4$, $M_7$, B omit अक्षम्
[15] $M_2$, $M_4$, $M_6$—संस्थानात्
[16] $M_4$, B—°इतिकर्तव्यानुगृहीतम्°
[17] $M_1$, $M_2$, $M_4$, $M_7$, My, B, read स्वगोचरपरिच्छेदे
[18] P, PM, T, $M_3$, $M_5$, $M_6$, V & A—कारणम्
[19] $M_1$—यथा हि

$ *Taittirīya Brāhmaṇa* I.1.2.
* *Cf. Ślokavārtika* under I.1.5, śl. 26 ( *vanavāda* ) :
‘तस्योपलक्षणं चापि क्वचित् केनचिदिष्यते ।
रूपादीनां विशेषेण देशकालाद्यपेक्षया ॥”
† परिच्छेदः=ज्ञानं, निर्णयो वा ।
§ करणमात्रम्=करणसामान्यम् ।



‘न हि तत् करणं लोके, वेदे वा किञ्चिदीदृशम् ।
‡इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता[1] ॥’ इति ।

*ततश्च सन्तति[2]स्मृत्याऽनुगृहीतेन चक्षुषा ।
विज्ञायमानं ब्राह्मण्यं प्रत्यक्षत्वं न मुञ्चति ॥

तथा च दृश्यते नानासहकारिव्यपेक्षया ।
चक्षुषो[3] जातिविज्ञानजनकत्वं[4] यथोदितम्† ॥

“सुवर्णं[5] व्यज्यते रूपात् ताम्रत्वादेरसंशयम् ।
तैलात् घृतं विलीनं च, गन्धेन तु रसेन वा ॥

भस्मप्रच्छादितो वह्निः स्पर्शनेनोपलभ्यते ।
§अश्वत्वादौ[6] च दूरस्थे[7] निश्चयो जायते[8] ध्वनेः ॥

संस्थानेन घटत्वादि, ब्राह्मणत्वादि योनितः ।
क्वचिदाचारतश्चापि सम्यग् राज्ञानु[9]पालितात् ॥ $” इति[10] ।

[1] $M_3$ & $M_6$—अर्थता°
[2] $M_2$, My—सन्तत°
[3] B—चक्षुषे
[4] P, PM—°करणत्वम्
[5] $M_2$—स्ववर्णम्
[6] $M_1$, $M_2$, $M_4$, $M_6$, B—अश्वत्थादौ
[7] $M_1$, $M_7$—विदूरस्थे ( no च )
[8] $M_1$,$M_2$,$M_4$, $M_7$, B—भवति
[9] P, PM—राज्यानु°; $M_1$—आज्ञानु°
[10] $M_2$ omits इति

‡ *Ślokavārtika* ( *Sambandhākṣepavāda* ) under I.i.5.śl. 37.
‘इतिकर्तव्यतासाध्ये’ अङ्गाधीने; ‘अनुग्रहे’ उपकारे; ‘अर्थिता’ सापेक्षता इति भावः ।
*Cf. Nyāyaratnākara* ( Chowkhamba edn. ) on the above verse p. 507 :
“सर्वत्र चक्षुरादौ प्रदीपाद्यर्थित्वदर्शनादैकान्तिकं सहायापेक्षणं नाशक्तिमापादयति । प्रत्युत इतिकर्तव्यतयैव करणत्वं, तदभाव एव तन्न सिध्यति ।”
* Veṅkaṭanātha quotes this and the following verse in his *Nyāyasiddhāñjana* V. p. 267.
*Cf. Prakaraṇapañcikā* III. p. 17 :
“जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरा ।
पूर्वाकारावमर्शेन प्रभाकरगुरोर्मता ॥”
† श्लोकवार्तिक इति भावः ।
§ *Cf. Ślokavārtika* ( Vākyādhikaraṇa ) śl. 358, p. 947 :
“पश्यतः श्वितिमारूपं हेषाशब्दं च शृण्वतः ।
खुरनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥”
$ *Vide ibid* ( Vanavāda ) I. i.5, śls. 27-29.

यत्समानवयोवेषपिण्डद्वयविलोकने ।
तत्क्षणादक्षितो[1] भेदो नावभातीति भाषितम्[2] ॥
नैतावता*विभागस्य प्रत्यक्षत्वं[3] निवर्तते[4] ।
सादृश्यदोषात्[5] तत्र स्यात् विभागस्यानवग्रहः ॥
समानरूपसंस्थानशुक्तिकाकलधौतयोः ।
विवेकः सहसा नाभादिति[6], कालान्तरेऽपि किम् ॥
प्रत्यक्षो न भवेत्? एवं[7] विप्रक्षत्रविशां भिदा ॥

†यद्वा—सन्ततिविशेषप्रभवत्वमेव ब्राह्मण्यम् । तच्च अन्वयव्यतिरेकाभ्यां यथालोकं[8] §कार्यान्तरवद्[9]वगन्तव्यमेव[10] ।

के पुनः सन्तति[11]विशेषाः ?
येषु ब्राह्मणशब्दं प्रयुञ्जते[12] वृद्धाः ।
केषु वा[13] प्रयुञ्जते[14] ?
उक्तं हि[15]गोत्रार्षेयादिस्मृतिमतिष्वत्यनेकशः ।
आस्तामप्रस्तुता चिन्ता, प्राची प्रस्तूयते कथा ।
सिद्धं[16] गोत्रादियुक्तत्वात् विप्रा भागवता इति ॥

---

1 P, PM, T, A, $M_2$, $M_3$, $M_5$, $M_6$, $V_1$—°अक्षतः
2 My—भावितम्
3 $M_1$—प्रत्यक्षं तु
4 B—विवर्तते
5 $M_5$—°योगात्
6 $M_2$—नाभाद्यदि
7 $M_3$—एव
8 $M_2$ & My—यथालोक°
9 A—कार्यान्तरात् ; $M_1$—कार्यान्तरम्
10 $M_7$, My—°अवगम्यमेव
11 P, PM—°सन्ति°
12 $M_3$, $M_6$—प्रयुज्यते
13 $M_2$ adds न
14 PM—अप्रयुञ्जते
15 P, PM, T, $M_3$, $M_5$, $M_6$, $V_1$, & A, omit हि and the line falls short of one syllable
16 $M_1$—कथम्

---

* विभागो भेदः, विशेषो वा ।

† *Cf. Prakaraṇapañcikā*, III, p. 31 :

"तेन सन्ततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः । तत्प्रभवानामेव कर्मस्वधिकार इति न किञ्चिदवहीनम् । के पुनस्ते सन्ततिविशेषाः ? न ते परिगणय्य निर्देष्टुं शक्यन्ते; किन्तु लोकत एव प्रसिद्धाः प्रत्येतव्याः । तथा च तज्जन्यत्वेऽवगते ब्राह्मणशब्दं प्रयुञ्जते लोकाः ।"

§ कपालद्वययोग एव घटोत्पत्तिः; नो चेन्न । एवं, एतादृशपितृमातृकारणत्व एव ब्राह्मणत्वं, न त्वन्यथा इति भावः ।



[ भागवतेषु व्रात्यादिशङ्कापरिहारः ]

*वैश्यव्रात्यान्वये जन्म यदेषामुपवर्णितम्[1] ।
†"पञ्चमस्सात्वतो नाम विष्णोरायतनानि सः ॥
पूजयेदाज्ञया राज्ञः, स तु भागवतस्स्मृतः ।'
§'वैश्यात्तु जायते व्रात्यात्' इति वाक्यद्वयेक्षणात् ॥
अत्र ब्रूमः—किमेताभ्यां वचनाभ्यां प्रतीयते ?
अभिधानान्वयो वा स्यात्; नियमो[2] वाऽभिधीयताम्[3] ॥

न तावत् सात्त्वतभागवतशब्दौ वैश्यव्रात्याभिधायकावेवेति नियन्तुं शक्यौ; अप्रतीतेः, अतिप्रसङ्गाच्च । न हि 'पञ्चमस्सात्त्वत' इत्यत्र सात्त्वतभागवतशब्दयोः अर्थान्तराभिधान[4]प्रतिषेधः प्रतीयते, श्रुतहान्यश्रुतकल्पनाप्रसंगात् । इह हि व्रात्यवैश्यान्वयजन्मा यः, 'पञ्चमः सात्त्वत इति[5] तस्य सात्त्वतसंज्ञान्वयोऽवगम्यते, 'पञ्चम'-शब्दस्य प्रथमनिर्दिष्टत्वेनोद्देशकत्वात् ।

न च पञ्चमस्य सात्त्वतत्वे[6], सात्त्वतेनापि वैश्यव्रात्यपञ्चमेन भवितव्यम् । न हि उद्दिश्यमानस्या‡ग्निमत्वे, उपादीयमानस्याग्नेः धूमवत्वेन[7] भवितव्यम् । अतो न ईदृशस्मृतिपर्यालोचनया[8] सात्त्वतभागवतशब्दितानां[9] व्रात्यत्वनिश्चयः ।

---

1 $M_3$—°वर्णनम्
2 B—नियते
3 $M_1$, $M_2$, $M_4$, $M_7$, My—अभिधीयते
4 My—अर्थान्तराभिधात्व°
5 $M_3$ adds सः
6 $M_3$—हेतुत्वे
7 $M_6$—धूमत्वेन
8 $M_1$, $M_4$, $M_5$, B—°सर्वालोचनया $V_1$, A—°पर्यालोचनतया
9 $M_4$, B—°शब्दानां

---

* See p. 13 above, for the *pūrvapakṣa* view.

† To be identified.

§ *Cf. Manusmṛti* X. 23 :
"वैश्यात्तु जायते व्रात्यात् सुधन्वाऽऽचार्य एव च ।
भारुषश्च निजंघश्च मैत्रस्सात्वत एव च ॥"

‡ 'उद्दिश्यमानस्य' धूमवत इत्यर्थः ।

†यदि पुनरनयोः जात्यन्तरेऽपि प्रयोगो दृष्ट इत्येतावता, तच्छब्दाभिधेयतया भगवच्छास्त्रानुगामिनामपि[1] विप्राणां तज्जातीयत्वनिश्चयः, ततः तत्रैव[2] सहपठित*'आचार्य'शब्दस्यापि[3] निकृष्ट[4]व्रात्यापत्ये प्रयोगदर्शनात्, साङ्गसरहस्यवेददातुः द्विजवरस्यापि[5] व्रात्यत्वं स्यात्।

अथ तस्य व्रात्यवाचकाचार्यशब्दाभिधेयत्वेऽपि प्रामाणान्तरेणाविप्लुत[6]ब्राह्मण्यनिश्चयात्, आचार्यशब्दस्य[7] ‡'आचिनोत्यस्य बुद्धिम्' इत्यादिगुणयोगेनापि वृत्तिसंभवात् न व्रात्यत्व[8]शङ्का, तदत्रापि जात्यन्तरवाचक[9]सात्त्वतभागवतशब्दाभिधेयत्वेऽपि भगवच्छास्त्रानुगामिनाममीषामति[10]स्पष्टविशिष्टगोत्रार्षेयादिस्मरणदृढावगतत्वात्[11] ब्राह्मण्यस्य[12], सात्त्वतभागवतशब्दयोश्च सत्त्वति[13] भगवति भक्तियोगेनैव वृत्तिसम्भवात्, न व्रात्यत्वशङ्कावतारः। एतदुक्तं भवति—

नैवैक[14]शब्दवाच्यत्वात् एकजातीयता भवेत्।
माभूदाचार्यशब्दत्वात्$ ब्राह्मणस्य निकृष्टता ॥

[1] M$_1$—इत्येतावता तच्छास्त्रानुगामिनामपि
[2] M$_6$ - तत्रैवम्
[3] M$_1$, M$_2$, M$_4$, M$_7$, My & B—पदस्यापि
[4] PM, M$_1$—निष्कृष्ट°
[5] P—द्विजपरस्यापि
[6] M$_1$—°प्लुत°; P, PM, T, M$_2$, M$_5$, M$^7$, My, V$_1$, A—°आप्लुत°
[7] M$_1$, M$_4$, M$_7$, My & B add अपि
[8] M$_1$—वाक्यत्व°
[9] M$_2$—°वाचि°
[10] M$_3$—°इति°
[11] My—°दृढापातत्वात्
[12] M$_3$—ब्राह्मणस्य
[13] P, PM, T, M$_5$, V$_1$, A—सत्त्ववति; M$_2$, My—सात्त्वति; M$_3$—सति
[14] P, PM, T—न चैक°

† This paragraph is in elucidation of the word "atiprasaṅgācca" used in the para "na tāvat" etc. above.

* The term 'ācārya' is from the *Manusmṛti* X. 23a :
"वैश्यात्तु जायते व्रात्यात् सुधन्वाऽऽचार्य एव च।"

‡ *Cf. Nirukta* (Ānandāśrama Series 88) I. ii. 4, p. 36 :
"आचारं ग्राहयत्याचिनोत्यर्थान्, आचिनोति बुद्धिमिति वा"।
Also *Cf. Vihagendrasaṁhitā* (ms.):
'आचिनोति परान् सर्वान् आचारयति सर्वतः।
आचरेत्यपि तान् लोकान् स तु आचार्य उच्यते ॥' [XXII. 14]

$ "śabdyatvāt" would have been a better reading. But no text preserves this reading. As it stands now, the term "ācāryaśabdatvāt" has to be explained as a Bahuvrīhi compound, qualifying the term "Brāhmaṇa".



†तथा च 'हरि'शब्दस्य दृष्टा[1] मण्डूकवाचिता।
इति, तच्छब्दवाच्यत्वात् सिंहो मण्डूक एव किम्?
तथा[2] 'गो'शब्दवाच्यत्वात् शब्दश्चापि विषाणवान्?

ततश्च—

‡'सुधन्वाऽऽचार्य' इत्याद्या §यथाऽर्थान्तरवाचकाः[3]।
व्रात्यान्वये प्रयुज्यन्ते, तथैवैतौ भविष्यतः ॥

[ सात्त्वतादिशब्दानां रूढिरेवाश्रयणीयेत्युक्तेः निराकरणम् ]

$यदुक्तं योगरूढिशक्तिद्वयोपनिपाते सात्त्वतभागवतशब्दयो रूढिशक्तिरेवाश्रयितुमुचितेति, तदयुक्तम्। क्लृप्ता*वयवशक्त्यैवाभिधानोपपत्तौ सत्यां अक्लृप्ताखण्डशक्तिकल्पनानुपपत्तेः। योऽपि हि[4] सात्त्वतभागवतशब्दयोः वैश्यव्रात्यान्वयजन्मनि रूढि[5]शक्तिमभ्युपगच्छति, अभ्युपगच्छत्येवासावन्यत्र ¶सत्त्व[6]द्भगवच्छब्दयोः[7] प्रकृ-

[1] M$_1$—पृष्टा; M$_6$—दृष्ट°
[2] M$_1$, M$_7$—यथा
[3] M$_6$—°वाचिकाः
[4] M$_2$ reads योऽपीह; M$_5$ & M$_6$ omit हि
[5] M$_1$ &M$_3$—रूढ°
[6] PM—सत्त्ववत्°
[7] M$_1$—सात्वतभागवतशब्दयोः

† This and the two succeeding lines are quoted by Sudarśanasūri in his commentary on *Śrībhāṣya*, I.i.1, Vol. I, p. 153.

‡ *Manusmṛti* X. 23a : "वैश्यात्तु जायते व्रात्यात्" etc.

§ सुधन्वादिशब्दा यथा अर्थान्तरवाचका, एवं सात्त्वतभागवतशब्दावपीति योजना। 'यथार्थान्तरवाचका' इति न समस्तं पदम्।

$ See "रूढ्या" etc., p. 12 above.

* अवयवशक्तिः=योगशक्तिः।

¶ Parāśarabhaṭṭa in his '*Viṣṇusahasranāmabhāṣya*' gives the following explanations for the term '*sāttvata*' identifying the latter with '*mahābhāgavata*' [See Introduction to *Jayākhya Saṁhitā*]

(i) सत् ब्रह्म, सत्त्वं वा, तद्वन्तः सात्त्वन्तः, ब्रह्मविधाः सात्त्विका वा; तेषामिदं कर्म शास्त्रं वा सात्त्वतम्, तत्कुर्वाणाः, तदाचक्षाणाश्च वा।

(ii) सातयति सुखयत्याश्रितान् इति सात् परमात्मा; स एतेषामस्तीति वा सात्त्वताः। सात्त्वन्तो वा महाभागवताः।

The *Mahābhārata*, Āśvamedhikaparvan [Vavilla edn., Vol. XVIII] ch. 124, śls. 33-37 speaks in favour of the brahmanical status of the Bhāgavatas :

तिभूतयोः, तदुत्पन्नस्य च ‡तद्धितप्रत्ययस्यार्थान्तराभिधान[1]सामर्थ्यम्—$‘सात्त्वतं विधिमास्थाय’, §‘जन्मान्तरकृतैः पुण्यैः[2] नरो भागवतो भवेत्’ इत्यादौ। तदिहापि तद्योगेनैव व्रात्यान्वयजन्मनि वृत्तिसम्भवे न[3] शक्त्यन्तरकल्पनायां[4] प्रमाणं क्रमते[5]। सम्भवति चैतेषामपि[6] साक्षाद्भगवदाराधनाभावेऽपि[7] वासुदेवस्यायतनशोधनबलिनिर्हरणप्रतिमासंरक्षणादिक्रियायोगेनैव सात्त्वतभागवतशब्दाभिलप्यत्वम्[8], *‘तस्येदम्’ इति सम्बन्धमात्रेऽपि च ‘अण्’प्रत्ययस्मरणात्। †उक्तश्च वैश्यव्रात्यान्वयजन्मनोऽपि भगवदायतन[9]शोधनादिक्रियायोगः—‡‡‘सात्त्वतानां च देवायतन[10]शोधनं, नैवेद्यभोजनं, प्रतिमासंरक्षणम्’ इति। तथा—$‘विष्णोरायतनानि सः, पूजयेत्[11]’ इति।

[ वृत्तिसाम्यात् भागवतानां व्रात्यत्वमिति पक्षस्य निराकरणम् ]

एतेनेदमप्यपास्तं[12], यदेषामपि वृत्तिसाम्यात्[13] व्रात्यत्वमि[14]ति। अन्यदेव हि देवायतन[15]शोधनबलिनिर्हरण[16]प्रतिमा-

[1] $M_2$ and My omit from जन्मनि above upto अभिधान

[2] $M_1$ omits पुण्यैः

[3] All except ‘T’ read वृत्तिसम्भवेन, as one word.

[4] $M_1$, $M_2$, $M_4$, $M_7$, My, B—°कल्पने

[5] A, $M_1$ omit क्रमते

[6] PM, A omit अपि

[7] $M_1$ adds देवस्यायतनशोभा

[8] $M_1$, $M_6$—°शब्दाभिलब्धत्वम्
P, PM—°शब्दाभिधेयत्वम्

[9] $M_3$—भागवतायतन°; P, PM add आदि

[10] $M_1$, $M_4$, $M_7$—देवतायतन°

[11] P, PM, T, A, $V_1$—संपूजयेत्

[12] $M_4$, B—°उपास्तम्

[13] B—वृत्तिसामान्यात्

[14] $M_3$—वात्यत्वम्°

[15] $M_5$ & My—देवतायतन°

[16] $M_3$—°बलिहरण°

“अपार्थकं प्रभाषन्ते शूद्रा भागवता इति। न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः ॥ सर्ववर्णेषु ते शूद्रा ये ह्यभक्ताः जनार्दने। द्वादशाक्षरतत्त्वज्ञः चतुर्वेदविभागवित् ॥ अच्छिद्रपंचकालज्ञः सवै भागवतः स्मृतः। ऋग्वेदेनैव होता च यजुषाऽऽध्वर्युरेव च ॥ सामवेदेन चोद्गाता पुण्येनाभिष्टुवन्ति माम्। अथर्वशिरसा चैव नित्यमाथर्वणा द्विजाः ॥ स्तुवन्ति सततं ये मां ते वै भागवतास्स्मृताः ॥”

‡ अमुमेव प्रत्ययं ‘अण्’ इति स्वयमेव निर्दिशति।

$ *Mahābhārata*, Bhīṣma, ch. 62. śl. 39b.

§ *Paramasaṃhitā*, III. 38b.

* See *Siddhāntakaumudī*, IV. iii. 120.

† See p. 14 above where the word नैवेद्यशोधनं was used.

‡‡ To be identified.



संरक्षणादिकम्, अन्ये च अभिगमनोपादानेज्यास्वाध्याययोगाः*[1] भागवतैरहरहरनुष्ठीयमानाः क्रियाकलापा[2] इति, ज्योतिष्टोमादाविव। यथैव[3] हि ज्योतिष्टोमे[4] ग्रहचमसजुह्वादिपात्र†करणतक्षणादिषु तक्ष्णो व्यापारः, ऋत्विजस्तु विशिष्टमन्त्रोच्चारणदेवताभिष्टव[5]प्रभृतिषु, न च तावता तेषां तक्ष्णां चैकजातित्व[6]संशयः, एवमिहापि भगवच्छास्त्रसिद्धपाञ्चकालिकानुष्ठातॄणामन्येषामायतन[7]शोधनादि कुर्वतां प्रासाद[8]पालकापर[9]नाम्नां व्रात्यानां[10] चेति।

[ रथकारन्यायविवरणम् ]

‡यत्पुनरुक्तम्—सात्त्वतभागवतशब्दयोः यौगिकत्वे[11] §‘रथकार आदधीत’ इत्यत्रापि रथकारशब्दस्य रथकरण[12]योगेन¶ त्रैवर्णिक-

[1] $M_6$, B—°योग°

[2] A, $M_4$—क्रियायोगाः

[3] P, T, $M_3$, $M_5$, $M_6$ $V_1$, A—तथैव

[4] $M_6$—ज्योतिष्टोम°

[5] B—°अभिषव°

[6] $M_4$—°एकजातीयत्व°

[7] $M_4$, B add आदि

[8] My—प्रसाद

[9] $M_6$—°पालिकापर°; P—°पालकावर°

[10] P, PM, T, $M_3$, $M_5$, $M_6$, $V_1$—अन्त्यानाम्

[11] $M_3$, $M_4$ & B—योगिकत्वे

[12] $M_1$, $M_7$—रथकारण°

* *Vide Journal of Royal Asiatic Society*, ( 1911 ), p. 948 :

The Pañcakāla or Five-Time-observances enjoined on a Bhāgavata are : ( i ) *abhigamana* : morning prayer, abluting *etc.*, ( ii ) *upādāna* : fetching articles of worship, ( iii ) *ijyā* : divine worship, ( iv ) *svādhyāya* : study of the sacred lore and ( v ) *yāga* or *yoga* : divine meditation.

The day, from 4 a.m. to 10 p.m. is to be divided into five divisions for each of these acts. *Cf. Pādmasaṁhitā* : Caryāpāda : XIII : 3-4a :

“ ādyaṁ karmābhigamanamupādānamataḥ paraṁ ।
ijyā ca paścāt svādhyāyastato yogastataḥ paraṁ ॥
pañcaite vidhayasteṣāṁ kālāḥ pañcaiva te kramāt । ”

For a definition and explanation of these five terms, see *ibid* : śl. 4b, ff.

† “ Graha ”, “ Camasa ”, *etc.*, are the names of cups into which *soma*-juice is poured during a sacrifice. *Cf.* Śabara on *Pūrvamīmāṁsā* : III.i.16, p. 158 : “ grahādi somapātram ”.

‡ See p. 12 above for the pūrvapakṣa.

§ *Cf. Āpastambaśrautasūtra*, V. 3.19.

¶ रथकरणरूपयोगशक्त्या।

वृत्तिप्रसङ्ग इति, तदनुपपन्नम् । युक्तं हि* तत्राधानोत्पत्तिवाक्यावगतवसन्तादिकालबाधप्रसङ्गात्, **'सौधन्वना[1] ऋभवस्सूरचक्षस' इति मन्त्रवर्णावगतजात्यन्तरवृत्तिबाधप्रसंगाच्च । §§'माहिष्येण[2] करण्यां[3] तु रथकारः प्रजायते' इति स्मृत्यन्तरावगत[4]जात्यन्तरत्वेऽपि, ‡'क्षत्रियवैश्यानुलोमोत्पन्नो रथकारः, तस्य[5] इज्याधानोपनयनक्रिया-

[1] $M_2$—सौधन्वा; $M_3$—सौधन्वाना
[2] PM—माहिषेण
[3] P, $M_2$, $M_5$—करिण्याम्
[4] P, PM, T, $M_1$, $M_3$, $M_5$, $M_6$, $V_1$, A—स्मृत्यवगत°
[5] $M_1$ reads रथकारस्य for तस्य; there is no separate रथकारः preceding.

* 'अध्यवसानम्' इति शेषः ।

§ The "*ādhāna-utpattivākyas*" referred to here are : "vasante brāhmaṇo 'gnimādadhīta", "grīṣme rājanyaḥ" and "śaradi vaiśyaḥ" (*Taittirīya Brāhmaṇa*, I.i.2.1.)

*Vide Karmamīmāṁsā*, pp. 86-87 :

"The direction to perform an offering is laid down in an originating injunction (*utpattividhi*) or an injunction of application (*viniyogavidhi*), according as the matter concerned is a principal or a subordinate offering. The originating injunctions are few in number relating as they do, to the principal Vedic offerings only, such as the Agnihotra, the New and Full-moon sacrifices, the Soma sacrifice and so forth...The originating injunctions, however, do no more than excite in the mind of the hearer the desire to perform the action which they enjoin, generally in the form of a sacrifice; it remains for other injunctions, those of application (*viniyogavidhi*), to denote the exact manner of procedure (*itikartavyatā*) by specifying the numerous subsidiary actions requisite, and the materials and other necessaries for the performance."

** *Ṛgveda* : I.110.4.

§§ *Yājñavalkyasmṛti* : Ācārādhyāya : I.iv.95a.

‡ No printed text of the *Śaṅkhasmṛti* contains this passage. It is however, traced in the "*Reconstruction of the Dharmasūtra of Śaṅkha and Likhita*", attempted by Dr. P. V. Kane, in the *Annals of the Bhandarkar Institute*, Vol. VII, p. 115. The passage was numbered 76 there. The reading found is : "kṣatriyavaiśyānulomāntarotpannajo rathakārah, tasyejyādhānopanayanasaṁskārakriyā aśvapratiṣṭhā rathasūtravāstuvidyādhyayanavṛttitā ca". This passage appears in the Mitākṣarā on *Yājñavalkyasmṛti* : I-95 and in Aparārka. The Mitākṣarā [ Chowkhamba Sanskrit Series No. 62 ] has a variant : "kṣatriyavaiśyānulomāntarotpanno yo rathakāraḥ".



श्चाप्रतिषिद्धा' इति शङ्खवचनात्, विद्यासाध्येऽपि कर्मण्यधिकाराविरोधात्, त्रैवर्णिकानां च शिल्पोपजीवित्वस्य प्रतिषिद्धत्वेन तेषु रथकारशब्दस्यानुचितत्वाच्च[1] जात्यन्तरवाचित्वाध्यवसानम्[2] । न चेह तथा विरोधोऽस्ति । अपि च—

क्लृप्तावयवशक्त्यैव लब्धे[3] स्वार्थावबोधने ।
†नष्टावयवनामत्वं[4] प्रत्याचष्ट[5] च सूत्रकृत् ॥

§'प्रोक्षणीष्वर्थसंयोगात्' इति ।

[ सात्त्वतभागवतशब्दव्युत्पत्तिप्रदर्शनम् ]

*ततश्च सत्त्वान्[6] भगवान् भज्यते यैः परः[7] पुमान् ।
ते 'सात्त्वता', 'भागवता' इत्युच्यन्ते द्विजोत्तमाः ॥

[1] $M_5$ omits च
[2] A, $M_2$, $M_4$, $M_7$—°वाचित्वाध्यवसानम्
[3] A—लब्ध°
[4] All edns. and mss except $M_2$, read °मानत्वम्; We have adopted the reading of $M_2$.
[5] $M_6$—प्रत्याचष्टे
[6] P, PM, T, $M_1$, $M_2$, $M_3$, $M_6$, My—सत्त्वात्
[7] $M_3$ omits परः, spoiling the metre.

† नष्टावयवत्वं योगशक्तिराहित्यम् । 'नाम' पदेन प्रतिपादिकमुच्यते । नष्टावयवनामत्वं = रूढिम् इत्यर्थः ।

§ *Pūrvamīmāṁsā* : I.iv.11. This aphorism means that in words like "prokṣaṇī," the etymological significance itself is applicable; *i.e.*, the word is to be taken in its etymological sense alone and not the conventional one, for the former is quite compatible with the latter. The advantage of this *sūtra* over the preceding *sūtras* is that *all liquids* are meant by the term "prokṣaṇī", and not water *alone*.

* For a definition of the term *Bhāgavata*, see *Pādmasaṁhitā*, Caryāpāda, II. 91b-95a and XXI. 14-15. For an interesting account of the origin and significance of the term *Sāttvata* see J. Przyluski, '*Sātvant, Sātvata and Nāsatya*', *IHQ*, Vol. IX pp 83 91.

For a glorification of Pāñcarātrins along with Vaikhānasas, see *Mahābhārata*, Anuśāsana [ Vavilla edn. Vol. XVI ], ch. 78 :

"यतयो मोक्षधर्मज्ञा योगिनश्चरितव्रताः । पाञ्चरात्रविदो मुख्यास्तथा भागवताः परे ॥ [ 24 ]
वैखानसाः कुलश्रेष्ठाः वैदिकाचारचारिणः ।" [ 25a ]
"यावदेते प्रपश्यन्ति पंक्तीस्तावत् पुनन्ति च ॥" [ 28b ]

स्मृत्यन्तराणि च भागवतानामुत्कृष्टब्राह्मण्यप्रतिपादकानि[1] परस्तात् प्र[2]दर्शयिष्यन्ते ।†

[ सात्त्वतादिव्यपदेशे न्यायप्रदर्शनम् ]

§यत्पुनरुक्तं समाने[3] ब्राह्मण्ये किमिति सात्त्वतभागवतैकान्तिक[4]शब्दैरेव एतेषां[5] नियमेन व्यपदेश इति, तत्परिव्राजकनिगदादिवदित्यदोषः । ‡यथैव हि समाने ब्राह्मण्ये, यजुष्ट्वे च[6], केचिदेव ब्राह्मणाः, कानिचिदेव[7] यजूँषि 'परिव्राजकनिगद'शब्दाभ्यामभिधीयन्ते[8]—$' तिष्ठन्तु ब्राह्मणाः, परिव्राजका आनीयन्ताम् ', **'यजूँषि वर्तन्ते, न निगदाः; निगदा वर्तन्ते, न यजूँषि ' इति च[9], तथेहापि भविष्यति[10] । निगदाः—चतुर्थं मन्त्रजातम् । *' यजूँषि वा तद्रूपत्वात् ' इति न्यायाभिधानात् ।

[ वृत्त्यर्थपूजनादिना भागवतानामब्राह्मण्यमिति वचनस्य निरासः ]

§§वृत्त्यर्थ[11]देवतापूजानैवेद्यप्राशनादिभिः[12] ।
दौर्ब्राह्मण्यं यदप्युक्तं, तत्र प्रतिविधीयते ॥

[1] P, PM, T, $V_1$, A, add इति
[2] $M_2$ & My omit प्र
[3] $M_6$ reads सामान्येन
[4] $M_1$, $M_2$, $M_4$, $M_7$, My, omit क
[5] $M_2$, $M_5$, My—तेषाम्
[6] A, $M_6$—यजुर्ष्वेव
[7] $M_2$, My—केचिदेव
[8] T records variant ' अभियन्ते '
[9] $M_1$, $M_2$, $M_7$, My, B, omit च
[10] ' B ' adds इति
[11] P, PM—वृत्यर्थम्°
[12] $M_5$ reads °प्राशनादित:

† No such *smṛtis* are however, quoted by the author in the remaining portion of the text.

§ See p. 12 above, for the pūrvapakṣa-view.

‡ See *Pūrvamīmāṁsā*, II. i. 35-37 : " तेषां ऋक् यत्रार्थवशेन पादव्यवस्था ", " गीतिषु समाख्या ", " शेषे यजुश्शब्दः ", for the definitions of *ṛk*, *sāman* and *yajus* respectively. By the last of the above sūtras, the group of mantras called " nigada " also comes to be known as " yajus ".

$ *Cf.* Śabara under II. i. 43, p. 89.

** *Cf. ibid.* under II. i. 39, p. 89.

* *Vide Pūrvamīmāṁsā* II. i. 40.

§§ See p. 15 above.



[ अर्चनस्य द्वैविध्यप्रतिपादनम् ]

न हि भागवतैस्सर्वैः वृत्तयेऽभ्यर्च्यते[1] हरिः ।
दृष्टा हि बहवः स्वार्थं पूजयन्तोऽपि[2] सात्त्वताः ॥
केचिद्यदि परं सन्तः सात्त्वता वृत्तिकर्शिताः ।
पूजयन्ति[3] महाभागा वैष्णवा[4] वृत्तिकारणात् ॥
न तावतैषां ब्राह्मण्यं शक्यं नास्तीति भाषितुम्[5] ।
न खल्वाध्वर्यवं[6] कुर्वन् ज्योतिष्टोमे, पतिष्यति ॥
यदि न प्रतिगृह्णीयुः, पूजैव विफला भवेत् ।
पूजासाद्गुण्यसिध्यर्थमतस्ते प्रतिगृह्णते ॥
‡' अर्चनान्ते हिरण्यं च तस्मै देयं स्वशक्तितः[7] ।
अन्यथा पूजकस्यैव तत्र पूजाफलं[8] भवेत्[9] ॥'
†' हन्त्यल्पदक्षिणो यज्ञ ' इत्यादिस्मृतिदर्शनात् ।
ऋत्विजा द्रव्यलुब्धेन, स्वयं याच्ञापुरस्सरम् ॥
यदार्त्विज्यं कृतं कर्म, तदेव हि निषिध्यते ।

तद्यथा[10]—

*'' यदा[11]शंसमानमा[12]र्त्विज्यं कारयन्ति[13] ' उत वा मे दद्यात्

[1] P, PM—°अभ्यर्चितो
[2] $M_1$—°हि
[3] P, PM, T, $M_3$, $M_5$, $M_6$, $V_1$, A—याजयन्ति
[4] All edns. and mss. except $M_1$ & $M_7$ read महाभागैः वैष्णवैः—We have adopted the reading of $M_1$ & $M_7$
[5] $M_4$—भाषितम्
[6] $M_3$—°अध्ययनम्
[7] A—स्वशक्तिभिः । *Paramasaṁhitā* has असंशयम् here.
[8] *Paramasaṁhitā* has देवपूजाफलं for तत्र पूजाफलम्
[9] $M_1$ & $M_7$ omit this and the two preceding lines.
[10] $M_1$, $M_2$, $M_7$, My—यद्यथा
[11] $M_3$—यथा°
[12] $M_1$, $M_4$, $M_7$—पदाशंसमानम् ; $M_2$, My—यदशंसमानम् ; B—यथाशंसमानम्°
[13] $M_3$ adds इति

‡ *Paramasaṁhitā*, XVII. 46b-47a.

† *Manusmṛti*, XI. 40b.

* *Cf. Aitareya Brāhmaṇa* XV. ii. p. 418 [ Ānandāśrama Skt. Ser. 32, with Sāyaṇa's commentary ]. The passage reads thus :

उत वा मा वृणीते 'ति, तद्ध तत्परागेव[1], यथा जग्धम्[2]; न हैव[3] तद्यजमानं[4] भुनक्ति " इति ।

श्रद्धापूतदक्षिणादानं तूभयोरपि श्रेयस्करमेव[5] ।
†' योऽर्चितं प्रतिगृह्णाति, दद्यादर्चितमेव च[6] ।
तावुभौ गच्छतः स्वर्गम् ' इत्यादिस्मृतिदर्शनात् ॥

[ भागवतेषु देवलकत्वशङ्कानिरासः ]

*यदपि वृत्त्यर्थं[7]देवपूजनात् देवकोशोपजीवित्वाच्च देवलकत्वप्राप्तिरिति, तदपि देवतान्तरवृत्त्यर्थाराधनतत्कोशोपजीवन[8]विषयमिति द्रष्टव्यम्[9] ।

तथा च[10] भगवान् व्यासः—

[1] $M_1$ & $M_7$—तच्च परागेव
[2] $M_3$—दग्धम्
[3] All edns. and mss. except $M_6$ & A read न हैवम्. ' A ' has सहैवम्; We have adopted the reading of $M_6$.
[4] P, PM—त्यज्यमानम्; for तद्यजमानम्
[5] $M_1$—°एवम्
[6] My—वा
[7] P, PM—वृत्त्यर्थम्°
[8] $M_1$, $M_2$, $M_4$, $M_7$, My, B, omit तत्कोशोपजीवन
[9] $M_4$, B, omit द्रष्टव्यम्
[10] $M_3$—तथाह

" taddhaitadeva jagdhaṁ yadāśaṁsamānamārtvijyaṁ kārayata uta vā me dadyāt uta vā mā vṛṇīteti taddha tatparāñeva yathā jagdhaṁ na haiva tad yajamānam bhunakti ".

This passage points out that a careful *yajamāna* should avoid greedy priests who perform three types of objectionable offerings in sacrifices. *Cf. ibid.* p. 417 : " trīṇi ha vai yajñe kriyante, jagdhaṁ, gīrṇaṁ, vāntaṁ ".

*Vide* Sāyaṇa's commentary on it :

" tānyetāni trīṇi durbuddhibhir yajñe kriyante jagdhādisthānīyāni trīṇi, varjanīyānītyarthaḥ. "

For more information on this, see Sāyaṇa's commentary, p. 411.

† *Vide Manusmṛti.* IV-238. The remainder of the verse is " narakaṁ tu viparyaye ". The term " arcitaṁ " should be understood in the sense of " arcanāpurassaraṁ ". It is an adverb and not a noun.

This verse is also found in the *Mahābhārata*, Āśvamedhika [ Vavilla edn. Vol. XVIII. ] ch. 112, śl. 30.

* See pp. 15-16 above.



†' भवेद्देवलको यो[1] वै रुद्रकाल्युपजीवकः[2] । ' इति ।

अपि[3] भवति शाण्डिल्यवचनम्—

†वृत्त्यर्थं[4]याजिनस्सर्वे दीक्षाहीनाश्च केवलम् ।
कर्मदेवलका एते[5] स्मृता ह्यत्र पुरा मुने ॥
†तांश्च संवत्सरादूर्ध्वं न स्पृशेत्, न च संविशेत् ॥

तथा—

†कल्पदेवलकाः केचित् कर्मदेवलका अपि ।
अथ त्रिवर्षादूर्ध्वमयोग्या[6] देवकर्मणि ॥
†ये कल्पोक्तं प्रकुर्वन्ति दीक्षाहीना द्विजातयः ।
वृत्त्यर्थं वा, यशोऽर्थं वा, कल्पदेवलकास्तु ते ॥

[ देवलकशब्दार्थकथनम् ]

वृत्तिं कृत्वा तु विप्रेण दीक्षितेन विधानतः ।†
अन्येन पूजयेद्देवमशक्तः स्वयमर्चने ॥*
यजनं मुख्यमेवैतत्, गौणमेवान्यथा भवेत् ।†

' अन्यथा ' इति ' अदीक्षितेन ' इत्यर्थः । तदेव[7] स्पष्टयति—

' अदीक्षितेन विप्रेण येन केन विधानतः ।
वृत्त्यर्थं यत्कृतं कर्म तज्जघन्यमुदाहृतम् ॥ '† इत्यादि-

[1] ' B ' omits यो, in which case the metre becomes defective.
[2] P, PM—रुद्रकाद्युपजीवकः; $M_1$, $M_2$, $M_4$, $M_7$, My, B, read रुद्रकोशोपजीवकः
[3] $M_3$, $M_6$—अपि
[4] P, PM—वृत्त्यर्थम्°
[5] $M_1$—ह्येते; My—ये ते
[6] $M_2$—अयोग्यः; $M_3$—योग्याः
[7] $M_2$—एतदेव

† To be identified.

* *Paramasaṁhitā*, XVII. 46a.

*Cf.* also *ibid.*, 18b :

" अन्येन वैष्णवेनैव देवं शूद्रः प्रपूजयेत् ॥ "

स्मृतिशतपर्यालोचनया[1] पञ्चरात्रसिद्ध[2]दीक्षासंस्कारविर[3]हितानां ब्राह्मणानां देवकोशोपजीवनवृत्त्यर्थपूजनादिकमु[4]पब्राह्मणत्वदेवलकत्वावहमिति निश्चीयते ।

[ भागवतानां निर्माल्यनिवेद्योपयोगप्रयुक्ताशिष्टत्वनिरासः ]

§यत्पुनः शिष्टविगर्हितनिर्माल्यनिवेद्योपयोगात् भागवतानामशिष्टत्वमिति, तत्र[5] ब्रूमः । किमिदं[6] निर्माल्यं निवेद्यं चाभिप्रेतं श्रोत्रियस्य ?

[ तत्र निर्माल्यनिवेद्यशब्दार्थनिरूपणम् ]

पुष्पौदनादि[7]मात्रं चेत् सर्वलोकविरुद्धता[8] ।
पुष्पौदन[9]परित्यागं न हि लोकोऽनुमन्यते ॥
विशिष्टप्रतिषेधोऽपि न युक्तः तदसिद्धितः ॥

न हि अनिरूपितविशेषणा विशिष्टबुद्धिराविरस्ति । न चेह विशेषणं निरूपयितुं शक्यते ।

किमिति न शक्यते, यावता देवतोद्देशेन[10] परित्यागो विशेषणम् ?

*किमिदानीं पञ्चरात्रशास्त्रमपि प्रमाणमङ्गीकृतं भवता, येन

[1] P, PM, T, $M_1$, $M_3$ to $M_7$, $V_1$, A, B—°पर्यालोचनात्
[2] $M_2$ adds another सिद्ध
[3] $M_3$ omits र
[4] $M_1$—°पूजादिकम्
[5] $M_1$, $M_7$, My, B—अत्र
[6] $M_1$, $M_2$, $M_4$, $M_7$, My, B—किमिदानीम्
[7] All but P, PM—पुष्पोदनादि°
[8] P, PM, T, $M_6$—°अविरुद्धता
[9] All but P, PM—पुष्पोदन°
[10] P, PM, T, $M_3$, $M_5$, $M_6$, $V_1$, A, B—देवोद्देशेन

§ See p. 15 above for the opponent's view.
For a detailed discussion on this subject, see Vedānta Deśika's *Saccaritarakṣā*, Adhikāra III.

* The discussion here is, whether or not the usage of *nirmālya*, *nivedya*, *etc.*, contradicts the genuine character of the Bhāgavatas. The Mīmāṁsaka cannot attribute non-brahmanical character to the Bhāgavatas, says the author, on the ground that they use *nirmālya* and *nivedya* prohibited is some *smṛti*-texts.



पञ्चरात्रतन्त्रविहितमन्त्रप्रतिष्ठापितप्रतिमासु देवतात्वम[1]भ्युपेत्य तदुद्देशेन त्यागो विशेषणमभिलप्यते ?[2] कथं हि तत्प्रामाण्या[3]नभ्युपगमे[4], तत्प्रतिपाद्यमानाया देवतात्वं, कथंतरां च[5] तदुद्देशेन त्यक्तस्य[6] निर्माल्यनिवेद्यभावः ?

*न[7] हि काचित्[8] जात्या देवता नामास्ति[9]। यैव हि हविःप्रतियोगितया[10] प्रमाणभूतात् शब्दादवगम्यते, सा तत्र देवतेति हि वस्सिद्धान्तः ।

अथ पाञ्च[11]रात्रिकैः देवतोद्देशेन परि[12]त्यक्तत्वाभ्युपगमात्[13] निर्माल्यनिवेद्यभावः[14], हन्त तर्हि तैरेव परमपावनतयापि निर्माल्य-

[1] P, PM, T, $M_1$, $M_2$, $M_4$, $M_5$, $M_6$, My, B—देवताम्°; $M_3$ reads वासुदेवताम्° ( no प्रतिमासु before )
[2] P, PM, T, $M_5$ to $M_7$, $V_1$—अभिलष्यते; $M_3$ & My—अभिलक्षते
[3] A, B—कथं तर्हि प्रामाण्य°
[4] $M_3$—°अभ्युपगमे
[5] $M_1$, $M_2$, $M_4$, $M_7$, My & B, omit तरां च; $M_5$ has a lacuna from तत्प्रतिपाद्यमानाया: above, up to च here.
[6] A, $M_5$, $V_1$, omit तदुद्देशेन त्यक्तस्य
[7] My omits from न हि upto निर्माल्यनिवेद्यभाव: ।
[8] $M_2$—कश्चित्
[9] $M_3$—देवतानामस्ति
[10] A, B—हरि: प्रतिगृहीतृतया
[11] $M_3$—पञ्च°
[12] $M_1$, $M_2$, $M_4$, $M_7$ & B, omit परि
[13] B—परित्यक्ताभ्युपगमात्
[14] See note 7 above.

First of all, the prohibition pertains to the *nirmālya* and *nivedya* offered to deities other than Viṣṇu. Secondly, the Mīmāṁsaka has to qualify the terms "*nirmālya*" and "*nivedya*", even to refute their usage, because flowers and food in general cannot be termed so. He might say that "*nirmālya*" and "*nivedya*" are things offered by the Pāñcarātrins to some deity; but this statement lands him in trouble, since he does not admit of any deity with a personality and also because such a statement would imply his acceptance of the validity of the Pāñcarātra-texts. Without admitting their validity as the starting point, he cannot speak of a deity, and flowers *etc.*, being offered to that deity.

* *Cf. Tantravārtika* under I. iii. 10, p. 172 :
' विधिनैव हि देवत्वं प्रतिकर्मावधार्यते । न जात्या देवतात्वं हि कश्चिदस्ति व्यवस्थितम् ॥ '
*Cf.* also *Prakaraṇapañcikā*, V. p. 105 :
' देवतोद्देशेन द्रव्यत्यागो यागः ।......स्तोत्रं शस्त्रं यद्गुणवचनं । यदुद्देशेन च हविषां त्यागश्चोद्यते, सा देवता । तत्रैव याज्ञिकवृद्धानां देवताशब्दप्रयोगात् । यत्र हि आग्नेयादिदेशनार्थानुष्ठाने प्रवृत्तोऽग्निमुद्दिश्य हविस्त्यजति, तत्रैवमाहुरग्निरत्र देवतेति । '

निवेद्योपयोगस्या[1]ङ्गीकृतत्वात्, तद्वदेव परम[2]पावनत्वमङ्गीक्रियताम्।

अथापावनमेव तैः पावनबुध्या परिगृहीतमिति न तत्प्राशस्त्यमङ्गीक्रियते, हन्त तर्हि अदेवनैव देवताबुध्यारोपेण[3] तैः[4] परिगृहीतेति न तदुद्देशेन त्यक्तस्य निर्माल्यनिवेद्यभावोऽङ्गीक्रियताम्।[5]

एतदुक्तं भवति—पुष्पोदनादि[6]स्वरूपमात्र[7]त्यागस्यानिष्टत्वात्, स्वदर्शनानुसारेण च विशेषणासंभवात्, परदर्शनानुसारेण विशेषणनिरूपणे[8], तस्यैव परमपावनत्वापातात्, तन्त्र[9]प्रामाण्यमभ्युपगच्छद्भिः, अन्यैश्च, निर्माल्यनिवेद्योपयोगोऽवश्याङ्गीकरणीय इति।

[ निर्माल्यनिवेद्योपयोगो निषिद्ध इति पूर्वपक्षः ]

आह—कथं पुनः तन्त्र[10]प्रामाण्यमंगीकुर्वता निर्माल्यं निवेद्यं च न परिहरणीयम्?

निषिध्यते[11] हि तन्त्रेषु निर्माल्यप्राशनादिकम्।
यथा* सनत्कुमारीयसंहितायामुदीरितम्॥
†'निवेदितं तु यद्द्रव्यं[12] पुष्पं फलमथापि वा।
तन्निर्माल्यमिति प्रोक्तं[13], तत् प्रयत्नेन वर्जयेत्॥'

[1] M$_3$—निल्यत्वोपयोगस्य°
[2] M$_2$ & My alone have परम, while all other *edns*. and mss. omit it.
[3] M$_1$ M$_7$—देवताबुध्या रूपेण
[4] M$_1$—सैव
[5] M$_3$ omits this whole para, from अथ upto here.
[6] P, PM—पुष्पौदनादि°
[7] M$_1$ & M$_7$ add स्व
[8] M$_2$, My—विशेषणरूपेण
[9] All *ptd.* texts and *mss.* except M$_4$ & M$_6$ read तत्र; we have adopted the reading of M$_4$ & M$_6$.
[10] Here again, all *ptd.* texts and *mss.* except M$_4$ & M$_6$ read तत्र; we have adopted the reading of M$_4$ & M$_6$.
[11] 'B' adds न here, spoiling the metre.
[12] My—यत्सिद्धम्
[13] M$_1$—निर्माल्यमिति यत्प्रोक्तम्

* Published by the Adyar Library and Research Centre, Madras, 1969.

† Śivarātra, V. 48b-49a. Also *Cf. Paramasaṁhitā* XII. 36b–37a :
"पूजायां विनियुक्तं तु यद्द्रव्यमिह पूजकैः। निर्माल्यमिति विज्ञेयं स कार्येषु वर्जितम्॥"
*Cf.* also *Vasiṣṭhasaṁhitā* ( *ms* ) VII. 52b-5 a :
"निवेदितं च यद्द्रव्यं पुष्पं फलमथापि वा। निर्माल्यमिति तं [ तत् ? ] त्वेव प्रयत्नेन विवर्जयेत्॥"



तथा प्रदेशान्तरे—

‡'निर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपि।
मासं पयोव्रतो[1] भूत्वा जपन्नष्टाक्षरं सदा॥
**ब्रह्मकूर्चं ततः पीत्वा पूतो भवति मानवः॥' इति।

तथेन्द्ररात्रे—

*'न चोपजीवेद्देवेशं न निर्माल्यानि[2] भक्षयेत्'।

तथा—

†'न चोपयोग[3]योग्यानि निर्माल्यानि कदाचन॥' इति।

तथा संहितान्तरे—

§'निर्माल्यानि न चाश्नीयात्[4], न जिघ्रेन्न च लंघयेत्'।

इति।

तदेवमनेकसंहितासमधिगतनिषेधस्य निर्माल्योपभोगस्य कथमिव पावनत्वाङ्गीकारः?

अत्राऽऽह[5]—देवमुद्दिश्य त्यक्तस्यापि च[6] वस्तुनः।
नाडिकादशकादर्वागुपयोगो न निन्द्यते॥

तथेन्द्ररात्र एव—

[1] *Saccaritrarakṣā* ( *SR* ) quotes this passage and reads पयोव्रती here.
[2] *SR* reads निर्माल्यादि न for न निर्माल्यानि।
[3] M$_1$, M$_2$, M$_4$ & B omit योग in which case the metre becomes defective; PM reads न चोपभोग°
[4] M$_2$ and *SR* read निर्माल्यानि च नाश्नीयात
[5] M$_2$—तत्राह
[6] M$_1$, M$_2$ M$_4$, My & B, read न for च

‡ Ṛṣirātra, VIII. 77b 78. Variants : "भक्षयित्वा चापि" in the first line, "जप्त्वा चाष्टाक्षरं" in the second line and "पूतो भवति साधकः" in the third line.

** A mixture of five products of the cow ( *pañcagavya* ) with *darbha*-water.

* IX. 2a.

† This is not found in the extant text of the Indrarātra-section, perhaps lost in the rest of ch. IX, which ends in a blank.

§ To be identified.
*Cf Paramasaṁhitā* III. 44 :
"निर्माल्यं लङ्घयेन्नैव न भुञ्जीत न संस्पृशेत्।
न दद्याच्च न जिघ्रेच्च रक्षेत्........ च॥"

‡‘ दशनाड्यधिकं पूरं[1] स्थापयेत्तु विचक्षणः ।
कालयोगस्समुद्दिष्टः[2] रात्रावहनि चैव हि[3] ॥’

*‘ कालयोगातिरिक्तं तु निर्माल्यं परिचक्षते ।
ततस्तदप्सु चैवाग्नौ क्षिपेत्, भूमौ खनेत्तु वा[4] ॥’ इति[5] ।

उच्यते—नात्र निर्माल्यप्राशनादि प्रशस्यते ।
किन्तु †पूरणपूजायां[6] विनियुक्तस्य वस्तुनः ॥
नाडिकादशके पूर्णे पश्चात्त्यागो विधीयते ।

सामान्येन निवेदितस्य पुष्पौदनादेः[7] कृतकार्यतया निर्माल्यत्वेनापनये[8] प्राप्ते नाडिकादशक[9]पूरणं पूजांगतया स्थापनं विधीयते—§‘ दशनाड्यधिकं पूरं स्थापयेत्’ इति ।

ततश्च तन्त्रसिद्धान्तपर्यालोचनयापि वः ।
हरिद्रा[10]चूर्णनैवेद्यपादाम्बु[11]स्पर्शनादिकम् ॥
न सिध्येत्; $तन्त्रसिद्धान्तः क नु, यूयं क चाल्पकाः?

[ तन्निरसनपूर्वकं विष्णुनिर्माल्यादेः परमपावनत्वनिरूपणम् ]

अहो विद्यालवोल्लसिजिह्वाग्रस्य विचेतसः ।
सितासितं वचो भाति सकलङ्केन्दुविम्बवत् ॥

[1] $M_3$—पूर्वम्

[2] *SR* reads स उद्दिष्टः ।

[3] *SR* has च ।

[4] $M_6$, $M_7$, B, $V_1$ & A—च

[5] PM omits इति

[6] $M_4$, B—पूर्वेण पूजायाम्

[7] All but P, PM—पुष्पोदनादेः

[8] $M_2$, My—°अपनयने

[9] P, PM, T, $M_2$, $M_3$, $M_5$, $M_6$, My, $V_1$ & A omit क

[10] My—हारिद्र°

[11] $M_3$, A—°पदाम्बु°

‡ I. 10b-11a. Variants : स्थापयित्वा for स्थापयेत्तु and स उद्दिष्टः for समुद्दिष्टः ।

* I. 11b, 10a. Variant : वा चाग्नौ for चैवाग्नौ ।

† For an account of *pūraṇapūjā*, see Indrarātra, ch. I. See also *Kapiñjalasaṁhitā*, ch. 29.

§ Indrarātra, I. 10b.

$ This is Yāmuna's reply to the above arguments regarding *nirmālya* and *naivedya*.



*ये हि युष्मद्विधा मूर्खाः, तेषामेव निषेधगीः[1] ।
सेव्यमानं हि तत्सर्वं[2] वैष्णवैरधिकारिभिः ॥

अघौघध्वंसनायालं सोमपानमिवाध्वरे ।
अन्येषां हि तदस्पृश्यं †पुरोडाशः शुनामिव ॥

तद्यथेश्वरसंहितायाम्—

‡‘ दुर्लभो भगवद्भक्तो लोकेऽस्मिन् पुरुषस्सुत ।
तत्रापि दुर्लभतरो भावो वै यस्य[3] तत्त्वतः ॥’

‘ पादोदकं प्रति शुभः[4] सिद्धान्ने[5] च निवेदिते ।
स्रगादिके चोपभुक्ते ह्युप[6]भोगार्थमेव[7] च ॥’

‘ अतश्च भावहीनानामभक्तानां[8] च षण्मुख ।
निषिद्धं भगवन्मन्त्र[9]हृक्पूतमखिलं हि[10] यत् ॥’ इति ।

तथा प्रदेशान्तरे—

[1] $M_3$—निषेधकीः; $M_4$, B—निषेधतः; $M_6$—निषेधधीः

[2] $M_3$—तत्सर्वं°

[3] $M_3$ omits यस्य, to the detriment of metre.

[4] $M_1$, $M_4$, $M_7$, My—प्रतिशुभम्

[5] $M_1$, $M_3$, $M^4$, $M_6$—सिद्धान्ते

[6] $M_6$—चोपभ्युक्तेऽभ्युप°

[7] $M_1$, $M_4$, $M_7$, B—°उपयोगार्थमेव

[8] B—°मद्भक्तानाम्

[9] $M_1$—भगवत्श्मश्रु ( ! )

[10] *SR* has च for हि

* *Cf. Sāttvata Saṁhitā*, XXI. 45b-46 :

" yo na vettyacyutaṁ tattvaṁ pañcarātrārthameva ca ।
tathā sadvaiṣṇavīṁ dīkṣāṁ nānāśāstroktalakṣaṇāṁ ॥
na tena saha saṁbandhaḥ kāryaḥ................ ॥

† *Cf. Pādmasaṁhitā*, Caryāpāda, XII.83b :

" śunāmiva puroḍāśo na nīceṣu tadiśyate ॥ "

‡ These and a few other verses following, quoted by Yāmuna as from *Īśvara saṁhitā*, are not found in the available *āgamas* of that name. The *Īśvara saṁhitā* from which Yāmuna quotes appears to have been a different work. See Introduction to *Jayākhyasaṁhitā* ( Gaewkad Oriental Series ), p. 49.

*'कुङ्कुमं चन्दनं चैव[1] कर्पूरमनुलेपनम्[2] ।
विष्णुदेह[3]परामृष्टं[4] तद्धि पावनपावनम् ॥' इति ।

तथा पाद्मोद्भवे[5]—

*'विष्णुदेहपरामृष्टं[6] यच्चूर्णं[7] शिरसा वहेत् ।
सोऽश्वमेध[8]फलं प्राप्य विष्णुलोके महीयते ॥'

†तथेश्वरसंहितायाम्—

*'उपभुक्तस्य सर्वस्य गन्धपुष्पादिकस्य च ।
स्नानादावुपयुक्तस्य दधिक्षीरादिकस्य च ॥
दूषणं न प्रयोक्तव्यं शब्दैरप्रतिपत्तिजैः[9] ।
निर्माल्यबुध्या दैवीयं[10] पावनं दूषयन्ति ये ॥
ते यान्ति नरकं मूढाः, तत्प्रभावापलापिनः ।' इति ।

**यानि पुनः दीक्षितमेवाधिकृत्य समयानुशासनसमये निर्माल्योप[11]योग[12]निषेध[13]पराणि वचनानि, तानि[14] परिषदेशो[15]पयोगोत्तर[16]कालाभिप्रायेण द्रष्टव्यानि ।

1 P, PM, T, A, $V_1$ & $M_5$—चैतत्
2 *SR* has कर्पूरं चानुलेपनम्
3 $M_4$—विष्णोर्देह°
4 $M_2$—°परिभ्रष्टम्
5 $M_2$, $M_3$, $M_6$, $M_7$, B—पद्मोद्भवे
6 $M_2$—°परिभ्रष्टम्
7 $M_3$, $M_6$—यच्चूर्णम्
8 $M_1$—सोऽश्वमेधे°
9 $M_1$ to $M_4$, $M_6$, $M_7$ My & B, omit this line; A, $V_1$ & $M_8$ have अप्रतिपत्तिदैः
10 P & PM—देवीयम्
11 $M_7$ adds नि
12 T—निर्माल्योपयोगि°
13 $M_2$, My, omit निषेध
14 $M_1$, $M_2$, $M_7$, My, omit तानि
15 *SR*—°पार्षदर्शि°; PM—°पारिषद्येश°
16 $M_1$, $M_2$, $M_4$, $M_7$, My, B—°उपयोगानन्तर°

* To be identified.

† This is the second instance where Yāmuna quotes from *Īśvarasaṁhitā*, which is yet to be recovered.

** इतः पूर्वमभक्तानां निर्माल्याद्युपयोगनिषेधविषयो विचारितः । इदानीं दीक्षितस्यापि तद्विषये विचारः प्रस्तूयते ।



†यतो भगवदर्थेन त्यक्तं[1] स्रक्चन्दनादिकम् ।
पश्चादभोग्यतां[2] याति[3] विष्वक्सेननिवेदनात्[4] ॥
अत एव निवेद्यादि[5] ततोऽर्वागेव सात्त्वतैः ।
सेव्यते, तेन तत्तेषामुत्कर्षस्यैव कारणम् ॥

अपि च—

‡देवतान्तरनिर्माल्यं शिष्टैरिष्टं विगर्हितम् ।
§इदं तु वैदिकत्वेन[6] सोमपानवदिष्यते ॥
ये नाम भगवच्छास्त्रप्रामाण्यं नानुजानते ।
न निरूपयितुं शक्यं तैर्निर्माल्यमितीरितम्[7] ॥

[ भगवन्निर्माल्यप्रशंसा ]

निरूपणेऽपि भगवन्निर्माल्यमति[8]पावनम् ।
समस्तवैदिकाचार्यवचनैरवसीयते ॥
शब्दप्रमाणके ह्यर्थे, यथाशब्दं[9] व्यवस्थितिः ।
न चात्र शब्दो नास्तीति वक्तव्यं बधिरेतरैः ॥

यथा[10] ब्रह्म[11]पुराणे च पठ्यते—

1 $M_3$, My—त्यक्त°
2 $M_2$—पश्चादयोगताम् ; PM—तत्पश्चाद्भोग्यताम्
3 T—यान्ति
4 *SR*—°परिग्रहात्
5 *SR*—निवेद्यं तत् for निवेद्यादि
6 The rest of the *ms.* 'B' is lost from the word सोम.
7 $M_4$, $M_6$—°उदीरितम्
8 $M_3$—°निर्माल्यमिति°
9 $M_1$, $M_2$, $M_4$, $M_5$, $M_6$, My, A-यथाशब्द°
10 $M_3$, $M_6$—तथा
11 $M_1$, $M_4$, $M_6$, $M_7$, My—ब्राह्म°

† *Cf. Sāttvata Saṁhitā*, X. 57-58.

'द्विजातेः दत्तशिष्टस्य पुष्पपत्रादिकस्य च । विहितश्चांभसि त्यागो विष्वक्सेनार्चने कृते ॥
धर्तव्यं न चिरं चाग्रे यत्पुरा विनिवेदितम् । नैवेद्यं मन्त्रमूर्तीनां किंचित्पुष्पफलादृते ॥'

‡ देवतान्तरनिर्माल्यं शिष्टैः विगर्हितत्वरूपेण इष्टमित्यर्थः ।

§ *Cf. Viṣṇusaṁhitā*, XXXIX. 12-13a :

'निर्माल्यं न स्पृशेदद्यात् लंघयेद्वाशनं कुतः । सर्वेषामेव देवानां निर्माल्यमशुचि स्मृतम् ॥
विष्णुभुक्तं तु पुष्पादि शुचीत्याददते परे ।'

†विष्णोर्नैवेद्यकं[1] शुद्धं मुनिभिर्भोज्यमुच्यते ।*
अन्यन्निवेद्यं[2] निर्माल्यं भुक्त्वा चान्द्रायणं चरेत्[3] ॥
†विष्णुदेह[4]परामृष्टं[5] माल्यं पापहरं शुभम् ।
यो नरश्शिरसा धत्ते, स याति परमां गतिम् ॥‡

एतेन—§'निर्माल्यं च निवेद्यं च भुक्त्वा चान्द्रायणं चरेत्' इति स्मरणमपि रुद्रकाल्यादिविषयमित्यावेदितव्यम्[6] ।

तथा[7] महाभारते—

*'हृदि ध्यायन् हरिं तस्मै निवेद्यान्नं समाहितः[8] ।
मध्यमानामिकाङ्गुष्ठैः गृहीत्वान्नं मितं[9] पुनः[10] ॥
प्राणाय चेत्यपानाय व्यानाय च ततः परम् ।
उदानाय समानाय स्वाहेति जुहुयात् क्रमात् ॥' इति[11] ।

[1] *SR*—निवेदितम्
[2] P, PM—अन्यन्निवेद्य; *SR*—अन्यवेद्यं तु
[3] $M_3$ adds इति
[4] $M_1$, $M_5$, A—विष्णोर्देह°
[5] $M_2$—°परिभ्रष्टम्
[6] $M_1$, $M_2$, $M_4$, $M_6$, $M_7$, My—°इत्यादि वेदितव्यम्
[7] $M_2$ reads यथा; PM omits तथा
[8] $M_1$—समाहितम्
[9] $M_1$, $M_4$, $M_6$, $M_7$—गृहीत्वा निर्मितम्; $M_3$—गृहीत्वान्नमितः; P, PM—गृहीत्वान्नमितम्
[10] *SR* has समाहितः for मितं पुनः
[11] PM, $M_1$, A, omit इति

† Passages to be identified.

* *Cf. Pādmasaṁhitā*, caryā, XII. 81b :
" विष्णोर्निवेदितं शुद्धं पावनानां च पावनम् ' ॥

‡ *Cf. Pādmasaṁhitā*, caryā, XII. 85 :
' धरितं विष्णुनिर्माल्यं चन्दनाद्यनुलेपनम् ।
अहर्निशं धारयतां न पुनर्जननं भवेत् ॥ '

§ To be traced out. *Cf. Pādmasaṁhitā*, caryā, XII. 79a :
' ब्रह्मेशानादिदेवानां नैव भोज्यं निवेदितम् ' ।

* To be identified.
*Cf. Laghuvyāsasaṁhitā* ( *Aṣṭāviṁśatismṛtis* ) ch. II. 74-76 :
' स्वाहाप्रणवसंयुक्तं प्राणायान्नाहुतिं ततः । अपानाय ततो हुत्वा व्यानाय तदनन्तरम् ॥
उदानाय ततो हुत्वा समानायेति पञ्चमम् । विज्ञाय चार्थमेतेषां जुहुयादात्मनि द्विजः ॥
शेषमन्नं यथाकामं भुञ्जीत व्यंजनैर्युतम् । ध्यात्वा तन्मनसा देयमात्मानं वै प्रजापतिम् ॥'
This type of taking food is called '*anuyāga*'. See *Pāñcarātrarakṣā*, p. 115 : ' ईदृशं च भोजनमेवानुयागसमाख्ययाऽन्यत्र व्यपदिश्यते । '



तथा प्रदेशान्तरे—

†'निवेदितं तु यद्देवे, तद्दद्यात् ब्रह्मचारिणे' इति[1] ।

तथा[2] महाभारते—

§'पञ्चरात्रविदो[3] मुख्यास्तस्य गेहे[4] महात्मनः ।
प्रापणं[5] भगवद्भुक्तं भुञ्जते चाग्र[6]भोजनम् ॥' इति ।

तथा च भगवान् शौनकः—

*'नैवेद्यं स्वयमश्नीयात्' इति[7] ।

[भगवन्नैवेद्यनिन्दकानां दण्ड्यत्वकथनम्]

इत्यादिस्मृतिशतसिद्धशुद्धि[8] विष्णोः
नैवेद्यं भवभयभेदि यो विनिन्देत् ।
नास्तिक्यात् स्मृतिवचनान्युपेक्षमाणः
तज्जिह्वानिशसनमेव युक्तमत्र ॥

[प्रसङ्गवशात् प्राणाग्निहोत्रस्य नैवेद्यं साधनं न भवेदिति शङ्काया निरासः]

‡ननु प्राणाग्निहोत्रस्य नैवेद्यं[9] साधनं कथम् ?
निरिष्टकं न शिष्टानामिष्टं[10] होमादिसाधनम्[11] ॥

[1] PM omits इति
[2] $M_3$—अथ
[3] $M_2$, My—पञ्चरात्रेऽपि ये
[4] $M_1$—देहे
[5] PM—प्रायणम्
[6] $M_1$, $M_2$, $M_7$, My—चाद्य°; $M_3$—चार्थ°
[7] $M_3$ omits इति
[8] $M_1$—°शुद्ध°
[9] *SR* has निवेद्यम्
[10] $M_4$ reads °शिष्टम्
[11] $M_2$—°शासनम्

† To be traced out.

§ Śānti, ch. 322, śl. 23.
*Cf. Sāttvatasaṁhitā*, ch. 17, śls. 423-424 :
' दानानां च व्रतानां च तपसां यज्ञकर्मणाम् । निवेदितव्यं यद्द्रव्यं, दत्तं वा यत्र यत्पुरा ॥ कर्तव्यमनुयागार्थं प्राक् तदेव हि केवलम् । तद्भावितमतोऽश्नीयात् पावनं प्रापणान्वितम् ॥ '

* *Viṣṇudharma* ( of Bhaviṣyapurāṇa ), Śaunakīya, ch. 92. śl. 32a :
" नैवेद्यं स्वयमश्नीयात् मौनीत्येतदुदङ्मुखः । '
*Cf. Pūjāsaṅgraha* ( ms. ) folio 90b:
" स्वयं वापि तदश्नीयात् सर्वपापविशुद्धये । '

‡ Vedānta Deśika quotes from ननु upto यथानुष्ठानतन्त्रत्वं etc., below, in his *Saccaritrarakṣā*, p. 93.

न च[1] द्रव्यान्त§राक्षेपो[2] होमायेत्यव[3]कल्पते[4] ।
रागतः प्राप्तमेवान्नं यतस्तेनोपजीव्यते ॥
नाऽपि भुक्त्यन्तराक्षेपो नैवेद्यायोपपद्यते[5] ॥
*'सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यात्' इति तत्प्रतिषेधनात् ॥
नैष दोषो, यतः प्राणप्रभृतिः देवतागणः[6] ।
गुणभूतः श्रुतो[7] विष्णोः, विष्णुपारिषदेशवत् ॥

यथैव हि[8] भगवन्निवेदितमपि[9] पुष्पौदनादि[10] विष्वक्सेनाय दीयमानं नानौचित्यमावहति,

यथा वा होतु[11]रुच्छिष्ट एव सोमरसोऽध्वरे[12] ।
अध्वर्य्वादेः विशुद्ध्यै स्यात्, एवमत्र भविष्यति ॥

अपि च—

[ भोज्याभोज्यव्यवस्थायाः शास्त्रैकशरणत्वोक्तिः ]

† भोज्याभोज्यव्यवस्थायाः शास्त्रमेव[13] निबन्धनम्[14] ।
तच्चेत् भोज्यमिदं[15] ब्रूते, किं वयं विदधीमहि ?

[1] $M_2$—अपि; My नापि
[2] $M_4$—द्रव्यान्तरे क्षेपः
[3] $M_3$—होमायेत्येव°
[4] $M_4$—°अवकल्प्यते
[5] P, PM—°उपपाद्यते
[6] $M_4$—°गणाः
[7] $M_4$—गुणभूताः श्रुताः; PM, $M_5$, $M_7$, A—गुणभूतश्रुतौ
[8] $M_2$ reads यथेह ( no हि separately.
[9] $M_1$, $M_2$, $M_5$, $M_7$, My & PM, omit अपि
[10] All except P, PM—पुष्पोदनादि
[11] $M_3$, $M_5$—हेतुः
[12] My—उच्छिष्टमेव सोमरसाध्वरे
[13] $M_3$—शास्त्रवेद°
[14] $M_2$ adds the following : तच्चेद्भोज्यव्यवस्थायाः शास्त्रमेव निबन्धनम्
[15] $M_3$, $M_6$—न चेद्भोज्यमिदम्° A—तच्चेच्छास्त्रमिदम्

§ आक्षेपः कल्पनमिति यावत् ।

* The remainder of the verse is 'अग्निहोत्रसमो विधिः ।" Many *Smṛtis* attribute this to Manu. But Aparārka on *Yājñavalkyasmṛti* ( p. 61 ) attributes this to Saṁvarta. *Cf.* also *Saṁvartasmṛti* ( Collection of 27 *smṛtis* , Ānandāśrama Skt. Series ), I.12.

† *Cf. Bhagavadgītā*, XVI. 24a :
" तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । "



यथाऽनुष्ठानतन्त्र*त्वं[1] नित्यकाम्याग्नि[2]होत्रयोः ।
एवं प्राणाग्निहोत्रेऽपि नैवेद्याशनतन्त्रता ॥

[ भागवतानां आचारमूलकाब्राह्मण्यशङ्कानिरासः ]

†यदप्युक्तम् गर्भाधानादिदाहान्त[3]संस्कारान्तरसेवनात् भागवतानामब्राह्मण्यमिति, तत्राप्यज्ञानमेवापराध्यति, न पुनरायुष्मतो[4] दोषः, ‡यदेते वंशपरम्परया वाजसनेय[5]शाखामधीयानाः §कात्यायनादिगृह्योक्तमार्गेण गर्भाधानादिसंस्कारान् कुर्वते ।

[ अपौरुषेयैकायनशाखानुसरणेन भागवतानामनुष्ठानवैचित्र्यसमर्थनम् ]

ये पुनः सावित्र्यनुवचन[6]प्रभृतित्रयीधर्मत्यागेन एकायनश्रुतिविहितानेव चत्वारिंशत् संस्कारान् कुर्वते, तेऽपि स्वशाखागृह्योक्तमर्थं यथावदनुतिष्ठमाना न शाखान्तरीयकर्माननुष्ठानात्[7]** ब्राह्मण्यात् प्रच्यवन्ते$; अन्येषामपि पर[8]शाखाविहित[9]कर्माननुष्ठाननिमित्ताब्राह्मण्य[10]प्रसङ्गात् । सर्वत्र हि जातिचरण=गोत्राधिकारादिव्यवस्थिना

[1] $M_6$—°तन्त्रत्व°
[2] $M_4$—नित्यकामाग्नि°
[3] $M_3$—देहान्त°
[4] My—°आयुषः
[5] $M_4$ & My add क
[6] My—सावित्र्याद्यनुवचन°
[7] PM—कर्मानुष्ठानात्
[8] $M_2$ has lacuna from प्रच्यवन्ते to रशाखा°; My—अन्यथा सर्वेषामितर°
[9] $M_1$, $M_3$ परस्परशाखाविरहित° $M_7$—परस्परशाखाविहित°
[10] $M_4$ adds न्य

* उभयोद्देशेन सकृदनुष्ठानं तन्त्रम् ।

† See p. 14 above for pūrvapakṣa. Vedānta Deśika quotes from here upto the end of the text, in his *Nyāyapariśuddhi*, p. 168.

‡ Deśika quotes from here upto the end, in his *Pāñcarātrarakṣā*, p. 95.

§ See *Kātyāyanagṛhyasūtra* ( ms. ), p. 25ff for *saṁskāras*.

** अननुष्ठानात् हेतोरिति भावः ।

$ *Cf.* the following quoted in the *Pāñcarātrarakṣā*, p. 110, as from the *Pārameśvarasaṁhitā* :
" निषेकादींश्च संस्कारान् स्वसूत्रोक्तान् समाचरेत् ।
पञ्चरात्रोदितान् वापि ये स्ववंश्यैरनुष्ठिताः ॥"

*Cf.* also *Auśanasa Dharmaśāstra* ( *Smṛtīnām Samuccayaḥ*, Ānandāśrama Sanskrit Series 48 ), I, 48 :
" निषेकाद्याः श्मशानान्ताः क्रियाः पृजान्यत्रधृक् ।
पञ्चरात्रेण वा कश्चित् तन्त्रोक्तं धर्ममाचरेत् ॥"

= चरणशब्देन शाखोच्यते ।

एव समाचारा उपलभ्यन्ते । यद्यपि ‡ ' सर्वशाखाप्रत्ययमेकं कर्म ', तथापि [1]न परस्परविलक्षणाधिकारिसम्बद्धाः धर्माः क्वचित् समुच्चीयन्ते[2] । विलक्षणाश्च त्रयीविहितस्वर्गपुत्रादिविषयोपभोगसाधनैन्द्राग्नेयादि[3]कर्माधिकारिभ्यो द्विजेभ्यः *त्रय्यन्तैकायन[4]श्रुतिविहितविज्ञाना†भिगमनोपादानेज्याप्रभृतिभगवत्प्राप्त्येको[5]पाय[6]कर्माधिकारिणो[7] मुमुक्षवो ब्राह्मणा इति नोभयेषामप्य[8]न्योन्यशाखाविहितकर्माननुष्ठानम[9]ब्राह्मण्यमा[10]पादयति । यथा[11] च एकायनशाखाया अपौरुषेयत्वं, तथा[12] काश्मीरागमप्रामाण्य एव[13] प्रपञ्चितमिति नेह प्रस्तूयते[14] । प्रकृतानां तु भागवतानां सावित्र्यनुवचनादित्रयीधर्मसम्बन्धस्य स्फुटतरमुपलब्धेः न त[15]त्यागनिमित्तव्रात्यत्वादि सन्देहं सहत इति[16] ।

[ नाथमुनितच्छिष्यवैभववर्णनम् ]

तत्तत्कल्पितयुक्तिभिः शकलशः कृत्वा तदीयं मतं
यच्छिष्यैरुदमर्दि सात्त्वतमतस्पर्धावतामुद्धतिः ।

1 'A' omits न

2 $M_1$ has a lacuna from अधिकारिसम् to समुच्चीयन्ते

3 $M_1$, $M_7$—°साधनैन्द्राग्न्यादि°
$M_2$, My—°साधनेन्द्राग्न्यादि°
$M_3$ omits आदि

4 $M_1$, $M_7$—त्रय्यैकायन°

5 $M_1$, $M_2$, $M_3$, My—भगवत्प्राप्त्यैक°

6 P, PM—°उपायक°; $M_4$—°उपायन°

7 My—°कर्माधिकारि°

8 $M_3$, A, omit अपि

9 $M_3$, $V_1$—°कर्मानुष्ठानम्

10 $M_3$, $M_6$—°ब्राह्मण्यम्°

11 $M_2$, A—तथा

12 A & $M_2$ omit तथा

13 P & PM omit एव

14 $M_1$, $M_2$, $M_4$, $M_7$, & My omit नेह प्रस्तूयते

15 My omits तत्

16 P, PM, T, $M_3$, $M_5$, $M_6$ & A omit इति

‡ *Cf.* Śabara on II. iv. 32, p. 142 : "..सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययं चैकं कर्म चोदत इति सिद्धं भवति ।"

See also *Pūrvamīmāṁsā*, II. iv. 18 : "न चैकं प्रति शिष्यते ।" and Śabara on this ( p. 139 ) : "न च यत् काठकेऽग्निहोत्रं तत् काठकमेवैकं पुरुषं प्रति विधीयते । तैत्तिरीयस्यापि तत् विहितमेव । पुरुषविशेषवचनाभावात् ।....तस्मात् सर्वशाखाभिरेकं समाप्तं कर्मोच्यत इति ।"

* See *Pādmasaṁhitā*, I. 5b-6a :
"आद्यमेकायनं वेदं सद्ब्रह्मप्रतिपादकम् ॥
तेनैव संस्कृता विप्रा मुख्यकल्पाधिकारिणः ।"

† *Ibid.* Jñāna, II. 5b :
"विज्ञानं भगवज्ज्ञानं तज्ज्ञानान्मुक्तिरुच्यते ॥"



यच्चेतस्सततं मुकुन्दचरणद्वन्द्वास्पदं वर्तते
जीयान्नाथमुनिः स्वयोगमहिम[1]प्रत्यक्षतत्त्वत्रयः ॥
आकल्पं विलसन्तु सात्त्वतमतप्रस्पर्द्धिदुष्पद्धति-
व्यामुग्धोद्धतदुर्विदग्धपरिषद्दैदग्ध्यविध्वंसिनः ।
श्रीमन्नाथमुनीन्द्रवर्धितधियो निर्धूतविश्वाशिवाः[2]
सन्त[3]स्सन्ततगद्यपद्यपदवीहृद्यानवद्योक्तयः[4] ॥

इति श्रीमद्यामुनमुनिप्रणीतं
आगमप्रामाण्यं सम्पूर्णम् ॥

1 $M_2$—°विहित°

2 $M_1$ & $M_7$—श्रीमन्नाथमुनीन्द्रवर्धितमनीषोन्मेषतो भूषिताः

3 $M_3$—वन्द्याः

4 $M_1$—°पदवीहृद्या ह्यवद्योक्तयः

# APPENDIX

[ Passages found at the beginning and end of the Manuscripts collated. ]

---

1. Manuscript " A " has, at the beginning, the following :

   'श्रीमते हयग्रीवाय नमः ।'

   Towards the end, it has the following :

   'श्रीमन्नाथमुनये नमः । श्रीमद्यामुनमुनये नमः । श्रीमते रामानुजाय नमः । श्रीमते हयग्रीवाय नमः । श्रीः ।'

2. Manuscript " B " has, at the end, the following ( incomplete ) :

   '......र्धं कृतमिति शंकापरिहारः । ....बाह्यगृहीतत्वादप्रामाण्यशंकापरिहारः । प्रत्यक्षश्रुत्युक्ताग्निहोत्रादिवदनुष्ठानं च । भागवतपरिग्रहाप्रामाण्यशंकापरिहारः । भागवतानामुत्कृष्टब्राह्मण्यं च । वैश्यव्रात्यान्वये जन्मेति शंकापरिहारः । योगरूढिशक्तिद्वयोपनिपाते रूढिरेव इति शंकापरिहारः । रथकारदृष्टान्तशंकापरिहारः । सात्त्वत दिव्यपदेशशंकापरिहारः । वृत्त्यर्थं देवपूजननैवेद्यप्राशनादिभिः दौर्ब्राह्मण्यशंकापरिहारः । देवलकत्वशंकापरिहारः । निर्माल्यनिवेद्योपयोगादशिष्टत्वशंकापरिहारः । प्राणाग्निहोत्रप्रकारगर्भाधानादिसंस्कारान्नरसेवनादब्राह्मण्यशंकापरिहारः । भागवतानामुत्कृष्टब्राह्मण्यम् । पञ्चरात्रस्यानुमानात् ज्योतिष्टो विधायकवाक्यवत् प्रामाण्यम् । अपौरुषेयत्वशंकापरिहारः । ....रीरवत्वेऽनेकदोषवत्त्वशंकापरिहारः । सिद्धे वस्तुनि शब्दानां प्रामाण्यं नेति शंकापरिहारः । ....प्रामाण्यम् । श्रुत्यादिभिः सार्वज्ञभगवत्...... । रुद्रादेः परमात्मत्वनिषेधः । भगवता पञ्चरात्रनिर्माणप्रकारः । शैवादेर्वेदविरुद्धत्वं च । तन्त्रत्वेन साधर्म्यशंकापरिहारः । पञ्चरात्रस्य सर्ववेदान्तसारत्वम् । मन्वादिस्मृतेः मूलत्वम् । वेदनिन्दादर्शनादप्रमाणशंकापरिहारः । वेदप्रशंसा च । पञ्चरात्रश्रुत्योरैकार्थ्यम् । दीक्षाकरणादेरवैदिकत्वशंकापरिहारः । चतुर्दशविद्यास्थानेष्वपरिगणनात् प्रामाण्यशंकापरिहारः । बादरायणेन निरस्तत्वादिति शंकापरिहारः । भारते पञ्चरात्रप्रशंसा । सूत्रार्थश्च । तन्त्रान्तरसमानपरिगणनाप्रामाण्यशंकापरिहारः । धर्मशास्त्रनिबन्धॄणां विप्लवज्ञानत्वम् । भगवतस्तु सर्वसाक्षात्कारवदिति विज्ञानम् । पञ्चरात्र सापेक्ष प्रमाण (इति शंका) परिहारः । पञ्चकालानुष्ठा ( नात् निर )तिशयसम्पत्प्राप्तिः । अ( न )पे( क्षित )त्वं विवक्षितमिति शंकापरिहारः । ( श्रु )तिविरु( द्ध ) ( त्वात् तन्त्र )स्याप्रामाण्यशंकायाः परिहारः । भगवच्छास्त्र( वेदयो )स्तुल्यप्रमाणत्वम् ।

   **आगमप्रामाण्ये** भगवता वेदपञ्चरात्रयोर्निर्माणप्रकारः । तत्र सचरितरक्षायां 'तथापि स्वाभाविकसमस्तार्थं...ते तस्या' इत्यन्तं ग्राह्यम् । मन्वादिस्मृतेर्मूलत्वम् । तत्र सचरितरक्षायां 'प्रथा क( ? )सरसं( त ? )' इत्यादि 'बाह्यत्वमेव' इत्यन्तं ग्राह्यम् । किंच 'श्रीरामायणे च' इत्यादि ग्राह्यम् । वेदनिन्दादर्शनादि । तत्र श्रीपञ्चरात्र ( रक्षा )याम् । 'प्रथमे...ओं...मे( ) घसागे'त्यादि( ? ) 'इति सिद्धम्' इत्यन्तं ग्राह्यम् । द्वापरस्य युगस्यान्त इत्यत्र । सचरितरक्षायां प्रथमे । ( )दंच कालविधानमि'त्यादि 'न दोष' इत्यन्तं ग्राह्यम् । किं च श्रीपंचरात्ररक्षायाम् 'न खल्वेतावता' इत्यादि 'विदामासु'रित्यन्तं ग्राह्यम् । परस्परनिषेधादित्यत्र, श्रीपञ्चरात्ररक्षायां 'तत्रेदं विमर्शनीयम्' इत्यादि 'ये गि( ) 'परमपुरुषार्थप्राप्तिसाधनमि'त्यन्तं ग्राह्यम् । आप्तोक्तत्वं विवक्षितमित्यत्र, सचरितरक्षायां प्रथमे 'कैराप्तैरुपादानम्' इत्यादि, 'अनुसन्धेयं' इत्यन्तं ग्राह्यम् । श्रुतिविरुद्धांशस्याप्रामाण्यमित्यत्र श्रीपंचरात्ररक्षायां 'अत्र तावदि'त्यादि 'पंचमादेव वेदात्' इत्यन्तं ग्राह्यम् । किं च ( )ग्राह्यम् । अत्रोच्यत इत्यत्र श्रीपंचरात्ररक्षायां 'ब्राह्मणैः क्षत्रियैः' इत्यादि, 'उपजीव्यम्' इत्यन्तं ग्राह्यम् । यत्पुनः शिष्टविगर्हितनिर्माल्यमित्यत्र सचरितरक्षायां 'त्रिधाधिकार' ( )ग्राह्यम् ।

   यत्पदांभोरुहध्यानविध्वस्ताशेषकल्मः ।
   वस्तुतामुपयातोऽहं यामुनेयं नमाम्यहम् ॥
   श्रीरंगनाथाय नमः ।
   आगमप्रामाण्यम् ।

3. Manuscript " $M_1$ " begins with the following :

   'यत्पदांभोरुहध्यानविध्वस्ताशेषकल्मषः । वस्तुतामुपयातोऽहं यामुनेयं नमामि तम्' ॥ श्रीमद्वेङ्कटवरदताताचार्यमहागुरवे नमः ।

   It ends with the following :

   यत्पदांभोरुहध्यानविध्वस्ताशेषकल्मषः । वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥ हरिः ओम् ।
   रौद्रिवर्षे सिंहशुक्रे नवम्यां भृगुवासरे । इदमागमसिद्धान्तप्रामाण्यं लिखितं मया ॥
   ग्रन्थोऽयं वेदकोटीररामावरजतावतः । तातदासस्य नान्यस्य लेखनं तत्र विद्यते ॥
   यदि चेद्वीक्षणेच्छात्र सतां सन्दर्भसंशये । वीक्ष्य पश्चात्प्रदातव्यं नापहर्तव्यमंजसा ॥
   यदि चेदपहर्ता स्यात् कश्चिदस्य विमूढधीः । प्रेत्य चण्डालतां प्राप्य मूकत्वमपि गच्छति ॥
   तस्मात् सन्देहसन्दर्भवीक्षणेच्छा भवेद्यदि । वीक्ष्य पश्चात्प्रदातव्यं नापहर्तव्यमंजसा ॥
   यादृशं पुस्तकं दृष्ट्वा तादृश लिखितं मया । अबद्धं वा सुबद्धं वा मम दोषो न विद्यते ॥

4. Manuscript " $M_2$ " begins with : शुभमस्तु । It ends with the following :

   आगमप्रामाण्यं सम्पूर्णम् । शुभमस्तु ।

5. Manuscript " $M_3$ " opens with हरिः ओम् । It ends with the following :

   हरिः ओम् । शुभमस्तु ।
   सिद्धित्रयसमायुक्तं प्रामाण्यं पाञ्चरात्रिकम् । वि( व्य )लिखत् वेंकटेशाख्यः स्पष्टं नैध्रुतकाश्यपः ।
   हरिः ओम् । श्रीमते हयग्रीवाय नमः ॥
   श्रीशैलताताचार्यकुलैकतिलकं भजे । श्रीनिवासगुरुं साक्षात् श्रीनिवासमिवापरम् ॥
   श्रियै नमः । ग्रन्थसंख्या मत( ा )—८५०

6. Manuscript M$_4$ " starts with :

यत्पद्मांभोरुहध्यानविध्वस्ताशेषकल्मषः । वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

Towards the end, it has :

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ॥ हरिः ओम् ॥ आगमप्रामाण्यं समाप्तम् ॥

7. Manuscript " M$_5$ " starts with the following verse :

वाधूलवेंकटाचार्यमस्मदाचार्यमन्वहम् । प्रपद्ये यत्कटाक्षेण सत्तां प्राप्तोऽस्म्यहेतुना ॥

It ends with the following :

शुभकृद्वर्षे गतवति भगवति दिवसेश्वरे वृषभम् । शुक्लाष्टम्यां श्रीनिधिरेतत्कृतिलेखनं समापितवान् ॥

सेवे हरिमेवेतरदेवेडितमुद्यद्रा(    )शोकाधिकृदाकारमुखं यः ।

पादानतमोदाधिकभूदानिखिलानाम् । सृष्टालसदष्टापदरुष्टात्मपटुश्रीः ॥

श्रेयस्स मे दिशतु भूयः श्रियःपतिरमेयः । क्षमादिगुणैर्यः कठोरहृदनेयः ।

पदाश्रयिभरेयः सुखेन मुनिभिः । ध्येयः स्फुटज्जलजभा यः ॥

स्वद्दश्याखिलहेयप्रवासनचणः । को यस्य नाभिजननो यः श्रितस्त्रिभुवनाय स्वयं हि निपुणः ॥

पापानामपनोदनेन भजतां तापानपारान् हरन्
    कोपावेशवशाद्रिपून् निहतवान् भूपान् विनैवायुधम् ।

आपातेन रथोत्तमस्य हृदि यः श्रीपादपद्मांचितः
    सोऽपारं मम हन्त्वघं करुणया श्रीपार्थसूतो हरिः ॥

सेवे वेदलतां लतासहचरं देवेशशर्वाब्जजैः
    भावेनैव सदेडितां नृषु कृपामावेदयन्तीं दृशा ।

या वेदान्तमुरस्स्थले निजपदासावेव ( ? ) सर्वेशिते-
    त्यावेगेन विनैव कैटभरिपोः संवेदयन्त्येधते ॥

गेयो यः श्रुतिमौलिभिः श्रुतिपुटीधेयोरुकीर्तिं नृणां
    ध्येयोऽन्तर्मुनिपुंगवैरविरलं हेयोपबन्धातिगः ।

कायो येन रिपोर्व्यदारि नखैरः प्रेयोनमद्ररक्षणात्
    श्रेयो मे स धिनोतु पूरुषहरिः भूयो दयावारिधिः ॥

मन्नाथं कलयामहे हृदि मुहुः भिन्नाञ्जनाद्रित्विषम्
    स्वं नामोक्तवतां मुदं विदधतं यं नाशयत् किल्बिषम् ।

सन्नायच्छुति ( यन्नामश्रुति ? ) मात्रतोऽपि रिपवः छिन्ना भयोद्रेकतः
    नुन्नारातिगणा बलैः हृदुदितापन्नानुकम्पेतरे ॥

कल्याणं विदधातु मे रघुवरोऽहल्यापदो वारकः
    तुल्याकारयुतोंऽबुदैरपनयन् शल्यानि संसेविनाम् ।



कुल्यातुल्यतयांबुधिं कलितवान् स्थल्यां विशन् दुर्द्दाम्
    बल्याकल्पितवानमून् युधि हतान् फल्याप्तितो भूभुजः ॥

पापानामपनोदनेन भजतां तापानपारान् हरन्
    कोपावेशवशात् रिपून् निहतवान् भूपान् विनैवायुधम् ।

आपातेन रथोत्तमस्य हृदि यः श्रीपादपद्मांचितः
    सोऽपारं मम हन्त्वघं करुणया श्रीपार्थसूतो विभुः ॥ ( repeated )

हस्तीन्द्राय वरं ददौ स्वचरणौ स्वस्तीच्छया सेविने
    निस्तीर्णः करुणोदयेन हृदये यस्तीव्रदुःखकुलम् ।

अस्तीदं प्रलयावृतं त्रिभुवनं कस्तीर्णयेदित्यभूत्
    तत् ग्रस्तीकुरुते स्म मे स निचयं ग्रस्तीकरोत्वंहसाम् ॥

येनादायि कृपावशात् स्थविरता स्वेनापनीय प्रभा-
    वेणात्यन्तमनोहरा तरुणता येनाप्यदेयाश्रिये ( ? ) ।

सेनानी गुरुणान्यभाविमहिमस्थेनापि खेदोन्नतिः
    तेनास्मद्वृजिनं भवेदपहृतं स्तेनादिजं योगिना ॥

गोदे! त्वत्पदपंकजं शरणये हे देवि! देवैस्तु......
    नोदेच्छुर्म( नं )मदंहसां स्वकृपया भूदेव्युदीते भृशम् ।

मे देहीति पतिश्श्रियोऽपि जगृहे वेदेडितो मालिकां
    ते देहद्युतिनिर्जितेन्द्रमणिरुङ्मोदेन मूर्ध्ना धृताम् ॥

श्रीमत्सौम्यवरार्यदिव्यचरणौ धीमद्भिरासेवितौ
    प्रेमप्रोन्नतमानसैरतितरां का( ल ? )क्रमागोचरैः ।

यामः स्वीयरुचांबुजं विजयिनौ सोमद्युतिं स्वैर्नखैः
    क्षेमश्रीभरितान् भृशं वितनुतां नो मत्सराद्याखिलान् ॥

श्रीरामानुजमाश्रये मुनिवरं क्षीराब्धिकन्याप्रिया-
    पारावरकृपापदं सरसिजाकाराधिकाक्षिद्वयम् ।

धीरात्मीयवचोजितप्रतिभटं कूराधिनाथादिभिः

..............................

8. Manuscript " M$_6$ " starts with the following :

श्रीमते वेदान्तगुरवे नमः । श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् । विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

विशुद्धविज्ञानघनस्वरूपं विज्ञानविश्राणनबद्धदीक्षम् ।

दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये ॥

It ends with the following :

हरिः ओम् । श्रीमते रामानुजाय नमः ।

9. Manuscript " $M_7$ " has no beginning and it ends with the following :

हरिः ओम् । शुभमस्तु । श्रीमत्तातगुरवे नमः । श्रीमते रामानुजाय नमः ।

आगमप्रामाण्यं सम्पूर्णम् ।

श्रीमद्यामुनमुनये नमः ॥

10. Manuscript " My " has the following beginning :

श्रीमते रामानुजाय नमः ।

यत्पदांभोरुहध्यानविध्वस्ताशेषकल्मषः । वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

It ends with :

हरिः ओम् ।

11. Manuscript " $V_1$ " which has no beginning, ends with the following :

हरिः ओम् । श्रीमद्यामुनमुनये नमः । श्रीमत्सुन्दरगुरवे नमः ।

12. Manuscript ' $V_2$ " starts with the following ; it breaks off in the middle :

श्रीरङ्गरामानुजमहादेशिकाय नमः । श्रीमान्-हृदि-श्रीनिगमान्तमहादेशिकाय नमः । प्रणामः ।
श्रीमद्रामानुजाय......श्रीधराभ्यां नमः। श्रीमते......श्रीहयवदनपरब्रह्मणे नमः। यामुनमुनये नमः ।
अस्मद्गुरुपरम्परायै नमः । श्रीमद्यामुनमुनये नमः ।

---

# I Index of Verses

## आगमप्रामाण्यान्तर्गतानां श्लोकानां अकारादिसूची ॥

[ * एतच्चिह्निताः श्लोकाः ग्रन्थान्तरेभ्यः उद्धृताः । ]

---

## 2 Index of Texts Quoted

ग्रन्थेऽस्मिन् उदाहृतानां ग्रन्थानां ग्रन्थभागानां च सूची ॥



## 3 Index of Authors Referred to

ग्रन्थेऽस्मिन् निर्दिष्टानां ग्रन्थकर्तृणां सूची ॥

ग्रन्थेऽस्मिन् उद्धृतानां मीमांसाव्याकरणसूत्राणां सूची ॥